# अभिराजयशोभूषणम्

अर्वाचीनसंस्कृतसाहित्यविविधप्रत्यग्रप्रवृत्तिपोषणपरम्

अभिनवकाव्यशास्त्रम्

रचनाकारः

महामहोपाध्यायस्समवाप्तराष्ट्रपतिसम्मानः

मिश्रोऽभिराजराजेन्द्रः

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयीयकुलपतिचरः



वैजयन्त प्रकाशन

इलाहाबाद

अभिराजयशोभूषणम्
अर्वाचीनसंस्कृतसाहित्यविविधप्रत्यग्र-
प्रवृत्तिपोषणपरं पञ्चोन्मेषात्मकमभिनवकाव्यशास्त्रम्



रचनाकारः
महामहोपाध्यायस्समवाप्तराष्ट्रपतिसम्मानः
मिश्रोऽभिराजराजेन्द्रः

प्रथमसंस्करणम् : जुलाई 2006 ई०



ग्रन्थमूल्यम् : पञ्चशतरूप्यकाणि

प्रकाशकः
वैजयन्तप्रकाशनम्
8 बाघम्बरीमार्गः, भरद्वाजपुरम्
इलाहाबादम् ( उ०प्र० )

मुद्रक :
दूबे प्रिन्टर्स एण्ड ग्राफिक्स
५० अ, बलरामपुर हाउस
इलाहाबाद-२११००२

# ABHIRĀJAYAŚOBHŪṢAṆAM

**The New Sanskṛta Poetics Explaining the Various Fresh Tendencies of the Modern Sanskṛta Literature**

Writer
**Prof. Abhirāja Rajendra Mishra**
**Recipient of the Rāṣṭrapati Sammāna**
**Ex Vice-Chancellor, Sampurnanand Sanskṛta University**
**VARANASI, INDIA**




Vaijayanta Prakashana
Allahabad

Abhirājayaśobhūṣaṇam
The New Sanskṛta Poetics Explaining the Various Fresh Tendencies of the Modern Sanskṛta Literature

Writer
Prof. Abhirāja Rajendra Mishra
Recipient of the Rāṣṭrapati Sammāna
Ex Vice-Chancellor
Sampurnanand Sanskṛta University
VARANASI (U.P. INDIA)

First Edition : July 2006 A.D.



Price of the Book : Rs. Five Hundred Only

Publisher
Vaijayanta Prakashan
8, Baghambari Road
Bharadwajapuram, Allahabad-6

Printed At
Dubey Printers
50-A, Balrampur House
Allahabad (U.P.)

# नान्दीवाक्

अभिराजयशोभूषणं नाम मदुपज्ञमभिनवतमं संस्कृतकाव्यशास्त्रमिदानीं प्रकाश्यते। काव्यशास्त्रेऽस्मिन् मद्विरचिताः ५६७ कारिकाः गद्यवृत्तिसमन्विता वर्तन्ते। किञ्चोदाहरणपद्यान्यपि पञ्चाशीत्यधिकैकशतमितानि विलसन्ति येषु प्रायेण शताधिकपद्यानि मत्प्रणीतान्येव। सर्वाण्यप्युदाहरणपद्यानि समकालीनकवीनां रचनात एव सङ्कलितानीति विशेषः।

पञ्चोन्मेषा अत्र वर्तन्ते–परिचयोन्मेषः, शरीरतत्त्वोन्मेषः, आत्मतत्त्वोन्मेषः, निर्मितितत्त्वोन्मेषः, प्रकीर्णतत्त्वोन्मेषश्च। परिचयोन्मेषे काव्यप्रशंसा–प्रयोजन–हेतु–लक्षण–विभाजनविषयाः सङ्कलिताः। एभिर्विषयैः काव्यपरिचयस्सम्पाद्यते।

शरीरतत्त्वोन्मेषे काव्यशरीरत्वेन ख्यातयोः शब्दार्थयोः साङ्गोपाङ्गं व्याख्या–नमुपन्यस्तम्। तत्र शब्दार्थसम्बन्धः, शब्दशक्तिप्रकरणम्, रीतिवृत्तिप्रकरणम्, गुणालङ्कारप्रकरणञ्च यथाशास्त्रं यथापरम्परं यथाप्रत्यग्रचिन्तनञ्च समुपन्यस्तं मया।

तत्र लक्षणायाः सर्वाण्यप्युदाहरणानि नव्यानि, यथा संस्कृतपाठकानां चिन्तनं प्रक्रान्तयुगानुकूलं नव्यञ्च स्यात्। संस्कृतविचारप्रवाहस्याप्यभिनवत्वं प्रासङ्गिकत्वञ्चापि सिध्येताम्। तद्यथा–संसद् ब्रवीति, अर्धोरुका अभ्यस्यन्ति, शुको माणवकः, पञ्चनदश्शूरः, कृष्णा दुह्यते इति। एवमेवाऽभिधामूलाया व्यञ्जनायाः सर्वाण्यप्युदाहरणानि मदुपज्ञान्येव। यथा–सभालचन्द्रो गङ्गाधरः, अभालचन्द्रो गङ्गाधरः, रामकृष्णौ, अहिनकुलौ, कालिकां वन्दे, सर्वं जानाति भर्ता, दयतां मयि सा शिवा, देवो मध्वरिर्जयेत्, विरोचनेन दिनं स्फीतम्, श्रमार्तस्य तरुर्मित्रम्, लक्ष्मणोऽटति केदारे, अदृष्टिः कौशिको दिने, पुण्डरीको वनेचरः इति। एभिरुदाहरणैः रूढोदाहरणानुशीलनजन्योद्वेगः पाठकानां विदुषाञ्चापि नवत्वपक्षधराणां शाम्यतीति विश्वसिमि।

अलङ्काराणां लक्षणानि पूर्वापेक्षया भाषादृष्ट्या सरलतराणि, अभिप्रायदृष्ट्या च स्पष्टतराणि कृतानीति स्वतः प्रामाण्येन निवेदये। तत्र पूर्ववर्तिलक्षणग्रन्थ–परिशीलनावाप्तो ममाऽनुभव एव प्रमाणम्। सहृदयानां कीदृशोऽनुभव इति पश्चादेव ज्ञातुं शक्यते।

गुण–दोष–चित्रकाव्य–गुणीभूतव्यङ्ग्यादिसन्दर्भा न विवेचिता मया, पिष्टपेषणभिया, सुज्ञातत्वधिया, कतिपयमहत्तराऽभिनवविषयविवेचनत्वरया च। तत्सर्वमन्यत्र समुपलभ्यत एव।

आत्मतत्त्वोन्मेषे विलसति मच्चिन्तनरसायनम्। रसालङ्काररीतिवक्रोक्त्यौ–चित्यानां कथं न काव्यात्मत्वं, कथम्पुनः प्रतीयमानार्थस्यैव काव्यात्मत्वमिति यथा मयोपन्यस्तं तद् गुरुकृपापीयूषपाकोद्भूतमेव किञ्चित्फलम्। सुधियो विद्वत्तल्लजाः कृपया पूर्वाग्रहं परित्यज्य निष्पक्षधिया शारदाऽनुरक्त्या च मत्परिश्रमं समीक्षन्ताम्।

सुकृतं दण्डिना विकृतञ्चानन्दवर्धनेन संस्कृतकाव्यशास्त्रम् इत्येके। कथञ्चिदपि तन्न। काव्यशास्त्रचिन्तनसाधुत्वोपस्थापने श्रेयस्करो विदर्भसम्प्रदायोऽश्रेयस्करश्च कश्मीरसम्प्रदाय इत्यपि चिन्तयितुं नोचितम्। यतो हि काव्यशास्त्रीयचिन्तने नैव दृश्यते मनागपि क्षेत्रवादः। भट्टनायकमहिमभट्टकुन्तकक्षेमेन्द्रादयस्सर्वेऽपि ध्वनिपरिपन्थिनः कश्मीराभिजना एवासन्।

ममाऽपि महती श्रद्धाऽऽनन्दवर्धनेऽभिनवद्वितीये। परन्तु न कथमपि तत्काश्मीराभिजनत्वादपितु तदुपकल्पितकाव्यात्मसिद्धान्तस्य सर्वविधसमञ्जसत्वात्। वाच्यार्थनिर्विशेषत्वादलङ्कारीतिवक्रोक्तयश्शरीरधर्मा एव काव्यस्य ! अलङ्कारं वक्रोक्तिं वाऽन्यथा प्रख्याप्य कियानेव प्रयासः क्रियेत तदात्मत्वसिद्ध्यर्थं, तत्र न श्रद्दधाति सहृदयविवेकः। आभरतात्पण्डितराजं यावत्तयोर्वाच्यार्थस्वरूपमात्रस्यैवाऽनुमोदनत्वात्। औचित्यतत्त्वस्य चापि न स्वतन्त्रास्तित्वमित्यभिनवगुप्तः क्षेमेन्द्रोपाध्याय एव ! ब्रह्मसमकक्षं रसतत्त्वञ्चापि काव्यार्थलक्ष्यभूतं सदेव ततोऽपि महत्तरं तत्त्वम्। सोऽपि न काव्यात्मा प्रत्युत काव्यात्मप्राप्तव्यं किमपि विलक्षणतत्त्वं मुक्तिकल्पम्।

एवं हि (वाच्यार्थ-लक्ष्यार्थ-व्यङ्ग्यार्थरूपेण व्यवस्थितस्य) **काव्यार्थस्य** यच्छ्रेष्ठतमं सहृदयश्लाध्यं लावण्यप्रतिमं रूपं तदेव काव्यस्यात्मतत्त्वं यद्धि प्रतीयमानाख्यम्। यत्र काव्ये प्रतीयमानोऽर्थोऽयं विलसति सर्वोत्कर्षेण तदेव ध्वनिकाव्यमित्यानन्दवर्धनः। श्रेयस्करीयमेव चिन्तनधोरणीत्यभिराजः। तत्सर्वमस्मदुपाध्यायानां **श्रीमच्चण्डिकाप्रसादशुक्लानां** स्पर्शमणिकल्पवपुषां वात्सल्यमहिम्ना **मयाऽभिराजराजेन्द्रेण** श्लक्ष्णया परिस्फुटया भाषया, देशिकोचितनिरवद्यव्याख्यया च व्याख्यातमत्रा**ऽभिराजयशोभूषणे**। तेन प्रीयन्ताम्मे गुणपक्षपतिनस्सहृदयाः।

**निर्मितितत्त्वोन्मेषेऽपि** पदे-पदे दृश्यतेऽभिनवत्वम्। गद्यपद्ययोरत्र मूलस्त्रोतो निरूपितं मया। अनियताक्षर-प्रमाणनियताक्षरयोः, किञ्च चूर्ण-निबद्ध संज्ञयोर्गद्य-पद्ययोर्विस्तृतं व्याख्यानमत्र मयाकृतम्। ततश्चानन्दवर्धनोद्दिष्टा **खण्डकथैवा**ऽद्यतनी **लघुकथा, सकलकथा** चैवाद्यतनी **दीर्घकथे**त्यपि सप्रमाणं निरूपितम्मया। उन्मेषेऽस्मिन् उपन्यासैकाङ्किलहरीकाव्यादीनां लोकप्रियाऽभिनवकाव्यभेदानां युक्तियुक्तं लक्षणं मयोपन्यस्तम्। महाकाव्य-खण्डकाव्य-नाटिकादीनाञ्चापि साम्प्रतिकयुगानुकूलं संशोधितलक्षणं प्रदत्तम्मया यथा नव्यरचनाकाराणां मार्गस्सुगमो भवेत्। वस्तुत उन्मेषेऽस्मिन् पारम्परिकी एव गद्यपद्योभयकाव्यनिर्मितिः संशोध्य परिकल्प्य च प्रस्तुता मया येन काव्यशास्त्रमिदं प्रमाणभूतं स्यादभिनवरचनायाः।

**प्रकीर्णतत्त्वोन्मेषे**ऽन्तिमे तु आद्यन्तं परिलक्ष्यते मदुपज्ञं मौलिकं चिन्तनम्। अत्र गीतितत्त्व-गलज्जलिका-छन्दोमुक्तकाव्यप्रकरणानि मयोपन्यस्तानि। गीतितत्त्वे गीतं, लोकगीतञ्च (Folk Songs) व्याख्यातम् ततश्च कजरी-नक्तक-प्रचरण-वटुक-रसिक-लाङ्गलिक-स्कन्धहारीय-औष्ट्रहारिक-फाल्गुनिक-चैत्रक-सूतगृह-

उत्थापनादिसंज्ञानां लोकगीतानां लक्षणोदाहरणपुरस्सरं व्याख्यानं कृतं वर्तते। राज्यान्तरप्रचलितानां रागिणी-नाटी-गर्बा-पण्डवानी-बाउल-अभङ्गादिलोकगीतानां पुनरुल्लेखमात्रम्।

लोकप्रियताया धुरि विद्यमानाया **गलज्जलिकायाः** पारसीकभाषा-सम्मतं संविधानकं प्रस्तूय तस्या विविधरूपाणि समुपन्यस्तानि मया। अन्ते च छन्दोमुक्तकाव्यस्य विस्तृतं प्रामाणिकञ्च सिद्धान्तं विशदीकृत्य, तस्यापि विविधरूपाणि समुदाहृतानि।

विगतशताब्दस्यान्तिमे दशके समायोजितासु कतिपयसंस्कृतसङ्गोष्ठीषु अभिनव-संस्कृतकाव्यशास्त्रविषयिणी चर्चा सञ्जाता। अस्मन्मित्रवर्यैः प्रो० राधावल्लभत्रिपाठिवर्यैः सागरविश्वविद्यालये एतादृश्यः सङ्गोष्ठ्यः समायोजिताः। प्रायेण सर्वैरेव समागतविद्वद्भिः प्रत्यग्रकाव्यशास्त्रस्य समर्थनं कृतम्। तत्र कारणद्वयमासीत्। प्रथमं तावदिदं यत्प्रतिष्ठापिते खलु साम्प्रतिकलोकतन्त्रेऽपगते च राजतन्त्रे नृपैकमात्रकृतीनां विषये किं क्रियेत? द्वितीयञ्चापि कारणमिदं यत्संस्कृतेऽप्यधुनाऽन्यभारतीयभाषोपयुक्ता लोकप्रियाः काव्यप्रकारा निर्मीयन्ते नव्यैः कविभिः। परन्तु तेषां कृते नोपलभ्यते कश्चित् काव्यशास्त्रावलम्बः। अतएव कथा-नाट्यादिसम्बद्धानां नूतनकाव्यप्रकाराणामपि नियमनिर्देशार्थं किञ्चिदभिनवकाव्यशास्त्रमपेक्षितमेव।

तावता कालेन वाराणसेयैः आचार्यप्रवरैः प्रो० रेवाप्रसादद्विवेदिवर्यैः स्वोपज्ञा काव्यालङ्कारकारिका प्रकाशिता। जयपुरस्थैः डॉ० ब्रह्मानन्दशर्मभिश्चापि काव्यसत्यालोकाख्यः काव्यशास्त्रचिन्तनपरः स्वोपज्ञग्रन्थः प्रकाशितः। काव्यलक्षण-काव्यात्मविषयिणी काऽपि नूतनचर्चा प्रवृत्ता सम्प्रति या हि ग्रन्थयोरनयोरुपनिबद्धाऽऽसीत्। शास्त्रार्थे सकृत्प्रवृत्ते सत्यन्येऽपि केचिदाचार्याः काव्यशास्त्रचिन्तनेऽग्रेसरीभूताः। तत्राचार्यशिवजीवोपाध्यायः (वाराणसी) आचार्य-राधावल्लभत्रिपाठी (सागर) आचार्यरहसविहारी द्विवेदी (जबलपुरम्) प्रमुखाः।

ममापि चेतसि समुत्था काऽपि काव्यशास्त्रचिकीर्षा। वस्तुतोऽस्याश्चिकीर्षाया बीजानि मन्मनःक्षेत्रे उप्तान्यासन् अस्मत्साहित्यशास्त्रोपाध्यायैः ध्वन्या-लोकाध्यापकैः परमाराध्यैः डॉ० चण्डिकाप्रसादशुक्लवर्यैः। अनुत्तम-प्रतिभमाचार्यानन्दवर्धनपादमवगमयितुं गुरुवर्यैर्दीपशिखाऽख्या काचिद् विलक्षणैव टीका कृता याऽधुना प्रकाशिता वाराणसीस्थविश्वविद्यालयप्रकाशनेन। टीकेयं लोचनस्थान् प्रमादान् सम्यक्तया शमयति।

तदेवोप्त बीजं विश्वविद्यालयीयाऽध्ययनकाले समयमवाप्य कन्दलितम्-**अभिराजयशोभूषणरूपेण**। संकल्पितकाव्यशास्त्रस्याऽस्य अभिराजयशोभूषणस्य प्रथम उन्मेषः परिचयाख्यो मया प्रणीतो यो हि मध्य-प्रदेश-संस्कृताकादमी मुखपत्रिकाया दूर्वाया २३ तमेऽङ्के प्रकाशितोऽभूत्। उन्मेषेऽस्मिन् काव्यप्रयोजन-

काव्यहेतुकाव्यलक्षण-काव्यविभाजनविषयकं मदभिनवचिन्तनमासीत्। तत्सर्वमधीत्याऽन्येषामपि समवयस्कानां प्रसुप्तचिन्तनं प्रबुद्धं जातम्। अभिनव-चिन्तन-प्रवाहः कश्चिदुदियाय संस्कृतरचनाधर्मितायाम्। प्रो० राधावल्लभ-त्रिपाठिनाऽभिनवकाव्यालंकारसूत्राभिधं साङ्गोपाङ्गं काव्यशास्त्रं प्रणीतम्।

परन्तु तावदेव सम्पूर्णानन्दसंस्कृतविश्वविद्यालयीयकुलपतित्वदायित्वं निर्वोढुं मय्युपगते सति त्रिपुरहरनगरीं वाराणसीम् अभिराजयशोभूषणकार्यं स्थगितं जातम्। २४ अप्रैल २००५ मिततिथौ तद्दायित्वान्मुक्तस्सन्नेव भूयोऽपि कार्येऽस्मिन् सन्नद्धोऽभूवम्। ग्रन्थं प्रपूर्य प्रकाशनार्थं दत्ता मुद्रणप्रतिः (Press Copy) सर्वमपि मुद्रणं प्रायेणाऽवसितम्। परन्तु तावदेव मया ग्रन्थस्यास्य हिन्दीरूपान्तरमपि कृतम्। पुनर्व्यवस्थायामस्यां विलम्बो जातः। अन्ततश्चेदानीं ग्रंथोऽयं प्रकाश्यते।

भवतु! नाऽहं संशप्तकपक्षधरः कस्यचित्काव्यात्मसिद्धान्तस्य! परन्तु काव्यविषयकं यच्छाश्वतं सत्यं तदेव मह्यं रोचते। परम्परां सर्वथाऽपहाय नव्यं किञ्चिदाख्यातुं नोचितम्। यतोहि परम्परा निर्मीयते सहस्रमितानां पूर्वसूरीणां चिन्तनैः। परम्परायां विद्यते यच्छाश्वतं सत्यं तदेवाऽभिप्रेतं मम। अतएव **शाश्वततावाद** एव मम काव्यशास्त्रसिद्धान्तः।

अभितो धरित्र्यां स्वर्गलोके च राजन्ते ये यशः कायाः कवयस्सहृदयाश्च **तेऽभिराजाः**। तेषां यश एव भूषणं यस्य तन्नूतनं काव्यशास्त्रम् **अभिराजयशोभूषणम्**। एवं हि कवि-सहृदयोभययशस्करमिदं मदुपज्ञं काव्यशास्त्रमिति धिया विरचितम्मयेदम्। एतावन्मात्रं सविनयं विनिवेद्य प्रत्नसूरीन् प्रति, समकालीनान् आचार्यान् प्रति, समुदाहृतकवितल्लजान् प्रति च महान्तं कार्तज्ञ्यभारं प्रस्तुवन् विरमामि। किञ्च,

**प्रणीयेदमभिराजयशोभूषणमञ्चितम्।**
**भूयः प्रवर्तये रुद्धां काव्यशास्त्रपरम्पराम्।।**

**सदुक्तिगुणलुब्धेन मया नूनमनुष्ठितम्।**
**साहसमकलिङ्गेन श्रियं हन्त लभे न वा।।**

**क्व सूर्या मम्मटाद्यास्ते क्व चाहं लघुदीपकः।**
**तुल्यं किन्तूभयोर्लक्ष्यं शारदासौधकाशनम्।।**

**प्रीयतां वागधिष्ठात्री कालिदासयशोधरा।**
**ममैतेन विलासेन सात्त्विकेनाऽनुरञ्जिता।।**

**गङ्गादशहरा** | **विद्वद्वशंवदः**
**शिमला, ६ जून २००६ ई०** | **मिश्रोऽभिराजराजेन्द्रः**

***

# अभिराजयशोभूषणम्

## ।।परिचयोन्मेषः।।

## ।। मङ्गलाचरणम्।।

क्वणन्मुखरवल्लकीनिनदमुग्धभृङ्गावली-
वितीर्णमधुगुञ्जितोच्छ्वसितभक्तहृन्मन्दिरा।
विदग्धवरटासना कवनशासना शारदा
भवेदमृतजीविनां मतिमतां यशोभूषणम्।।१।।

स्तम्बेरमवदनं तं क्रीडारञ्जितनगेन्द्रजासदनम्।
विघ्नारण्यदवाग्निं सिद्धिकलत्रं मुदा वन्दे।।२।।

जीवनसूत्रविधात्रीं क्रीडनकीकृतविरञ्चिहरिशम्भुम्।
शक्तिं वितरितशक्तिं नौमि मृडानीमनन्यपरतन्त्राम्।।३।।

भरतभामहरुद्रटदण्डिनो
ध्वनिकृदुद्भटवामनमम्मटान्।
सहृदयांस्तिलकाऽलककुन्तक-
क्षितिपभोजधनञ्जयशेखरान्।।४।।

मुकुललोल्लटशङ्कुकनायका-
भिनवरुय्यकमङ्खकवाग्भटान्।
अमरकेशवठक्कुरसागर-
प्रभृतिशास्त्रजुषो बुधतल्लजान्।।५।।

झनझनाहट से मुखरित वीणातंत्री के नादमाधुर्य से सम्मोहित भ्रमर-समूह द्वारा उत्पन्न मधुर गुञ्जारों से जिनके भक्तों के हृदयरूपी मन्दिर उच्छ्वसित हो उठे हैं, जो विवेक-सम्पन्न हंस की पीठ पर आसीन हैं, काव्यानुशासन करने वाली वह शारदा रसामृत का पान करने वाले प्रतिभा-पटिष्ट कविजनों का यशोभूषण बनें।।१।।

अपनी बालक्रीडाओं से नगेन्द्रनन्दिनी पार्वती के भवन को अनुरञ्जित करने वाले, विघ्नरूपी अरण्य के लिये दावाग्नि-तुल्य, सिद्धि नामक अर्धाङ्गिनी से संवलित उन गजवदन गणेश की प्रसन्नतापूर्वक वन्दना करता हूँ।।२।।

अपने जीवन-सूत्र का नियंत्रण करने वाली, ब्रह्मा, विष्णु एवं महेश को

भी खिलौना बना कर रखने वाली, शक्ति वितरित करने वाली, सर्व-तंत्र-स्वतंत्र शक्तिरूपा भगवती मृडानी को प्रणाम करता हूँ।।३।।

भरत, भामह, रुद्रट, दण्डी, ध्वनिकार आनन्दवर्धन, उद्भट, वामन, मम्मट, राजानक तिलक एवं अलक, कुन्तक, मालवेश्वर भोज, धनञ्जय, राजशेखर-।।४।।

मुकुल, लोल्लट, शंकुक, भट्टनायक, अभिनवगुप्त, रुय्यक, मङ्खक, वाग्भट, अमरचन्द्र सूरि, केशवमिश्र, गोविन्द ठक्कुर, सागरनन्दिन् प्रभृति काव्यशास्त्री प्रकाण्ड पण्डितगण।।५।।

क्षेमेन्द्रहेमचन्द्रौ च विद्यानाथधरावुभौ।
विश्वनाथजगन्नाथौ जयदेवाऽप्पयाभिधौ।।६।।

काव्यशास्त्राब्धिमन्थोत्थरत्नकल्पान् विकस्वरान्।
पूर्वसूरीनहं वन्दे यशोभूषणभूषितान्।।७।।

तत्तत्कृपालवोद्दीप्तबुद्धिदीपोऽहमानतः ।
अभिराजयशोभूषं काव्यशास्त्रं नवं दधे।।८।।

सञ्चिनोति यथा भृङ्गः पुष्पात्पुष्पाद्रसाऽऽसवम्।
करोमि सङ्ग्रहं तद्वद् यावद्भरतकाश्यपम्।।९।।

एष राजेन्द्रमिश्रोऽहं त्रिवेणीकविसंज्ञितः।
ग्रन्थारम्भे नवान् प्रत्नान् कोविदान्नौमि सादरम्।।१०।।

श्रीमदाद्याप्रसादाख्यं पितृव्यं बुधतल्लजम्।
आत्मानुप्राणकं वन्दे योगक्षेमैकचिन्तकम्।।११।।

यत्पदाब्जमधुप्रीत्या काव्ये शास्त्रे कृता रतिः।
श्रीचण्डिकाप्रसादं तं नौमि शुक्लान्वयं गुरुम्।।१२।।

क्षेमेन्द्र एवं हेमचन्द्र, विद्यानाथ एवं विद्याधर, विश्वनाथ एवं पण्डितराज जगन्नाथ, जयदेव एवं अप्पय दीक्षित।।६।।

काव्यशास्त्ररूपी सागर के मंथन से समुद्गत, देदीप्यमान रत्नतुल्य, यशरूपी भूषण से विभूषित उन पूर्वसूरियों की मैं वन्दना करता हूँ।।७।।

उपर्युल्लिखित उन समस्त आचार्यों के कृपा-लव से उद्दीप्त बुद्धिरूपी दीपक वाला मैं (अभिराजराजेन्द्र) विनम्रतापूर्वक अभिराजयशोभूषण नामक अभिनव काव्यशास्त्र का प्रणयन कर रहा हूँ।।८।।

जैसे (कोई) भ्रमर एक-एक पुष्प से रसासव का संचय करता है वैसे ही मैं भी आचार्य भरत से लेकर काश्यप (आचार्य रेवाप्रसाद द्विवेदी 'सनातन') तक के अभिप्रायों का संग्रह कर रहा हूँ।।९।।

त्रिवेणीकवि संज्ञा वाला राजेन्द्र मिश्र यह मैं ग्रंथ के प्रारंभ में नये-पुराने आचार्यों को सादर प्रणाम अर्पित कर रहा हूँ।।१०।।

अपने जीवन को अनुप्राणित करने वाले, योग एवं क्षेम के एकमात्र चिन्तक (अपने) पितृव्य विद्वत्प्रवर श्रीमान् आद्याप्रसाद मिश्र को प्रणाम करता हूँ।।११।।

जिनके चरणकमलों की मधुप्रीतिवश मैं काव्य एवं शास्त्र के प्रति उन्मुख हो सका उन (साहित्य) गुरुवर्य श्री चण्डिकाप्रसाद शुक्ल जी को नमन करता हूँ।।१२।।

**मङ्गलारम्भं मङ्गलमध्यं मङ्गलान्तञ्च काव्यं प्रशंसति महाभाष्यकारो भगवान् पतञ्जलिरिति गृहीताऽप्तजननिर्देशो ग्रन्थकार आदौ मङ्गलाचरणं विधत्ते। तच्च मङ्गलाचरणं शारदागणपतिमृडानीविषयकं कमपि ग्रन्थ-कृदभीष्टं निगूढक्रमं स्वारस्यविलसितं प्रकटयति। भक्तहृन्मन्दिरेषु वीणारणनोन्मदभ्रमरनिचयप्रसारित-मधुरगुञ्जितैः कमपि विलक्षण-मेवोच्छ्वासं हर्षातिरेकं जनयन्तीं वाङ्निर्मित्यधिदेवतां हंसासनां शारदामेवादौ प्रणमति ग्रंथकारः। भक्तजनास्तावत् कवयस्सहृदयाः साहित्यानुरागिणः सुकुमारकलापक्षधरा वा।**

**ततः परं वन्द्यते गणपतिर्विघ्नारण्यदवाग्निकल्पः। दवाग्निना भस्मीभूते सत्येव विघ्नबाधाऽरण्ये मङ्गलमिति कृत्वा रौद्रगणपतिस्वरूप-स्मरणम्। यद्यपि ऋद्धिः सिद्धिश्चेति द्वे भार्ये विनायकस्य तथापि सिद्धिमात्रेऽवसितरुचिस्समृद्धि-विमुखो ग्रन्थकृद्गणपतिं सिद्धिकलत्रं प्रस्तौति।**

**ततश्चाऽभीष्टदेवतां सर्वतन्त्रस्वतन्त्रां त्रिदेवरचयित्रीं निरतिशय-वत्सलत्वात् पुत्रीकृताय यस्मै कस्मैचिदपि समुपायनीकृतनिरवद्यकवित्व-प्रतिभां शक्तिस्वरूपां मृडानीं जगन्मातरं स्तौति भूषणकारः।**

**एतदनन्तरं पूर्वसूरिप्रणामार्पणप्रसङ्गः। आभरतान्नाट्यशास्त्रकारात् काश्यपमाचार्यरेवाप्रसादद्विवेदं सनातनोपाह्वं यावत् सर्वान् प्रमुखानलङ्कार-शास्त्ररचयितॄन् प्रणमति ग्रन्थकारस्तत्तदनुकम्पाप्रकाशितबुद्धिदीपत्वात्। तत्र ध्वनिकृदाचार्य आनन्दवर्धनः। राजानकतिलक उद्भटविवेककारो रुय्यक-**

**जनकः। अलकोऽल्लटो वा काव्यप्रकाशांशविशेषपूरयितेति भणति रुय्यकः काव्यप्रकाशसङ्केतटीकायाम्। शेखरस्तु राजशेखरोऽवन्तिसुन्दरीजानिः काव्यमीमांसाकारः। नायको भट्टनायको हृदयदर्पणकारः। अमरकेशव-ठक्कुरसागराः काव्यकल्पलताकृदमरचन्द्रः अलङ्कारशेखरकारः केशवमिश्रः काव्यप्रदीपकर्ता गोविन्दठक्कुरो नाटकलक्षणरत्नकोशकृत्सागरनन्दी च। प्रभृतिशब्देनाऽन्ये काव्यशास्त्रकाराः सिंहभूपालशारदातनयभानुदत्तराम-चन्द्रगुणचन्द्ररूपगोस्वामिकर्णपूराशाधरनागेशविश्वेश्वराः सूच्यन्ते।**

**अभितः स्वर्गे भूलोके च समं राजन्त इति क्रान्तप्रतिभाः कवयस्स-हृदयाश्च। तेषां यश एव भूषा यस्य तादृग्गुणविशिष्टं नवं नूतनं प्रक्रान्तयुगोपयोगि काव्यशास्त्रं दधे। कियद्विततमिदं काव्यशास्त्रमिति विशदयति यावदिति। भरतान्नाट्यशास्त्रकारात् अलङ्कारकारिकाकारं काश्यपं रेवाप्रसादद्विवेदं यावत्।**

महाभाष्यकार भगवान् पतञ्जलि आरंभ, मध्य एवं अन्त में मंगलाचरण से युक्त काव्य को प्रशस्त मानते हैं, इसलिये आप्तजनों का निर्देश शिरसा गृहीत कर ग्रंथकार ग्रंथ के प्रारंभ में मंगलाचरण प्रस्तुत कर रहा है। सरस्वती, गणपति एवं मृडानी-विषयक वह मंगलाचरण ग्रंथकार को अभीष्ट, रहस्यात्मक क्रम से युक्त, एक विशिष्ट स्वारस्य (आत्माभिप्राय) को प्रकट कर रहा है।

भक्तों के हृदयरूपी मन्दिरों में वीणानाद से उन्मद भ्रमर-समूह द्वारा प्रसारित मधुर गुञ्जारवों से किसी विलक्षण ही उच्छ्वास एवं हर्षातिरेक को उत्पन्न करने वाली, काव्यनिर्मिति की अधिदेवता हंसासना भगवती शारदा को ही सर्वप्रथम ग्रंथकार प्रणाम अर्पित करता है। भक्तजन हैं साहित्य के अनुरागी कवि एवं सहृदय (पाठक) जन अथवा सुकुमार कलाओं के पक्षधर लोग।

तदनन्तर वन्दना की जा रही है गणपति की जो विघ्नरूपी अरण्य के विनाशार्थ दावानल के समान हैं। दावानल के द्वारा ही विघ्न-बाधारूपी अरण्य के भस्मसात् होने पर लोककल्याण होना संभव है, इस अभिप्राय से यहाँ रौद्रगणपति का स्मरण किया जा रहा है। यद्यपि गणपति की दो पत्नियाँ हैं-ऋद्धि एवं सिद्धि। परन्तु 'सिद्धि' मात्र से परितुष्ट तथा ऋद्धि (धन-वैभव अथवा समृद्धि) के प्रति उदासीन ग्रंथकार भगवान् गणपति को सिद्धि-कलत्र (सिद्धि है भार्या जिनकी ऐसे) के ही रूप में प्रस्तुत कर रहा है।

इसके अनन्तर अभिराजयशोभूषणकार शक्ति-स्वरूपा, जगदम्बिका

मृडानी की वन्दना कर रहा है जो उसकी अभीष्ट उपास्य देवता हैं, सर्वतन्त्र-स्वतन्त्र हैं, ब्रह्मा, विष्णु एवं महेश (त्रिदेव) की भी रचयित्री हैं तथा निरवधि वत्सलता के कारण पुत्ररूप में अंगीकृत कर लिये गये जिस किसी को भी निरवद्य कवित्व-प्रतिभा प्रदान करने में पूर्ण समर्थ हैं।

इसके बाद आता है पूर्वाचार्यों को प्रणाम अर्पित करने का सन्दर्भ। नाट्यशास्त्रकार आचार्य भरत से लेकर 'सनातन' उपाधि वाले आचार्य रेवाप्रसाद द्विवेदी 'काश्यप' तक- अलंकारशास्त्र के समस्त प्रमुख रचनाकारों को ग्रंथकार प्रणाम अर्पित करता है, उन सब की अनुकम्पा-कृपा से प्रकाशित स्वबुद्धि-दीप वाला होने के कारण!

अब उन आचार्यों में ध्वनिकार हैं आचार्य आनन्दवर्धन। उद्भटविवेक (नामक उद्भटालंकार की टीका) के लेखक राजानक तिलक रुय्यक के पिताश्री हैं। राजानक अलक अथवा अल्लट काव्यप्रकाश के अंश-विशेष को पूर्ण करने वाले आचार्य हैं, ऐसा आचार्य रुय्यक बताते हैं (अपनी) काव्यप्रकाश की सङ्केतनाम्नी टीका में। शेखर हैं अवन्तिसुन्दरी के पति आचार्य राजशेखर, काव्यमीमांसा के प्रणयनकर्ता। नायक हैं-हृदयदर्पणकार आचार्य भट्टनायक। अमर हैं काव्यकल्पलताकार अमरचन्द्र। केशव हैं-अलङ्कारशेखर के कर्ता आचार्य केशवमिश्र। ठक्कुर हैं-काव्यप्रदीप के कर्ता गोविन्दठक्कुर तथा सागर हैं-नाटकलक्षणरत्नकोश के रचयिता सागरनन्दी। प्रभृति शब्द से सूचित होते हैं अन्यान्य काव्यशास्त्रकार जैसे सिंहभूपाल, शारदातनय, भानुदत्त, रामचन्द्र-गुणचन्द्र, रूपगोस्वामी, कर्णपूर, आशाधरभट्ट, नागेशभट्ट एवं विश्वेश्वर पण्डित।

अभितः अर्थात् दोनो ओर से, (जीवित रहते हुए) भूलोक में तथा (मृत्यु के अनन्तर) स्वर्गलोक में जो समान रूप से यशोभाजन बने रहते हैं, वे हैं क्रान्तप्रतिभा वाले कविगण एवं सहृदय (पाठक)गण। उनका (उज्ज्वल) यश ही है अलंकरण जिसका ऐसे विलक्षणगुण वाले, अभिनव, अर्वाचीनयुगोपयोगी काव्यशास्त्र का प्रणयन कर रहा हूँ। कितना विस्तृत है यह काव्यशास्त्र? इसका विवेचन किया जा रहा है 'यावत्' शब्द से। नाट्यशास्त्रकार भरत से लेकर **अलंकारकारिका** के लेखक आचार्य रेवाप्रसाद द्विवेदी 'काश्यप' तक।

## ।। काव्यप्रशंसाप्रकरणम् ।।

अमृतमप्यतिशेते काव्यमिति सहृदयानामनुभवः। तथाऽह कश्चित्-

कान् पृच्छामस्सुराः स्वर्गे निवसामो वयं भुवि।
किं वा काव्यरसः स्वादुः किं वा स्वादीयसी सुधा।।

अविदितगुणाऽपि कविता यदि वशीकरोति श्रोतृन् तर्हि का कथा विदितगुणायाः? यथाऽह सुबन्धुः

अविदितगुणापि सत्कविभणितिः कर्णेषु वमति मधुधाराम्।
अनधिगतपरिमलाऽपि हि हरति दृशं मालतीमाला।।

अमृत का भी अतिशायी होता है काव्य, ऐसा सहृदयों का (अपना) अनुभव है। किसी ने कहा है-किनसे पूछें कि कविता का रस (अधिक) स्वादु होता है अथवा अमृत? क्योंकि देवता तो रहते हैं स्वर्ग में और हम रहते हैं पृथ्वी पर।

विना गुणों का ज्ञान हुए भी जब कविता श्रोताओं को वशीभूत करती ही है तो फिर उस कविता का क्या कहना, जिसका गुण (मर्म) पाठक को ज्ञात हो जाय! जैसा कि सुबन्धु ने कहा है-अविदित गुण (प्रकर्ष) वाली भी सत्कवि की अभिव्यक्ति (श्रोताओं के) कर्णकुहरों में मधु की धारा उँड़ेल देती है। ठीक यूँ ही, जैसे अनधिगत सौरभ्य वाली भी मालती पुष्पों की माला दृष्टि को अपहृत कर लेती है।

क्षयं याति जगद्रूपं नितरां पाञ्चभौतिकम्।
वाङ्मयं किन्तु तद्रूपं चिरस्थायि विकस्वरम्।।१३।।

केनापि कर्मणा स्वेन द्वित्रान् किमुत पञ्चषान्।
यद्वा जानपदानेव लोको रञ्जयति ध्रुवम्।।१४।।

कविः किन्तु निजैः काव्यैर्लोकोत्तरवचोऽन्वितैः।
भृशमाकृष्य बध्नाति चतुरस्त्रं महीतलम्।।१५।।

पञ्च महाभूतों से निर्मित यह संसार का विस्तार तो निश्चित रूप से क्षय को प्राप्त हो जाता है। परन्तु उसी सृष्टि का वाङ्मय रूप चिरस्थायी एवं विकस्वर (नित्योज्ज्वल) बना रहता है।।१३।।

मनुष्य निश्चित रूप से अपने जिस किसी भी कार्य (आचरण) से दो-तीन अथवा पाँच-छह जानपदों (नागर जनों) को ही अनुरंजित कर पाता है।।१४।।

परन्तु (प्रतिभा का धनी) कवि लोकोत्तर अभिव्यक्ति से अन्वित अपने काव्यों द्वारा समग्र महीतल को ही बरबस आकृष्ट कर बाँध लेता है।।१५।।

अचिन्त्यचिन्तने शक्तोऽप्यदृष्टदर्शने क्षमः।
स्वहस्तामलकीकृत्य ब्रह्माण्डं कविरीक्षते।।१६।।

गुह्यकेशमपि स्वैरं कविः काव्यैकशेवधिः।
आत्मारामतया जीवन्नतिशेते निरङ्कुशः।।१७।।

नृपत्वमपि किम्मूल्यं कवित्वे प्रातिभे सति।
किमर्थं कमलां पश्येद्यस्य सिद्धा सरस्वती।।१८।।

अलं धनैरलङ्कारैरलञ्चापि चिरायुषा।
कवित्वं भावुकत्वं वा देहि मे चतुरानन।।१९।।

त्रिवर्गेऽसंशयं सिद्धे काव्यनाट्योपसेवनैः।
तिष्ठत्येव स्वयंसिद्धस्तुर्यो विरहकातरः।।२०।।

अचिन्त्य के भी चिन्तन में समर्थ, अदृष्ट को भी (हस्तामलकवत्) प्रत्यक्ष कर देने में सक्षम कवि (समूचे) ब्रह्माण्ड को हाथ पर रखे आँवले की तरह देख लेता है।।१६।।

काव्यरूपी एकमात्र निधि (खजाने) वाला निरंकुश कवि, आत्माराम भाव से जीवन जीता हुआ गुह्यकेश कुबेर को भी पूर्णतः न्यक्कृत कर देता है।।१७।।

प्रतिभा-प्रसूत कवित्व के अक्षत रहते राजपद भी भला किस मूल्य का? जिसकी सरस्वती सिद्ध है वह (कवि) भला कमला (लक्ष्मी) की ओर क्यों देखे?१८।।

धन से क्या लेना-देना? अलंकारों तथा लम्बी आयु से भी भला क्या लाभ? हे चतुरानन विधाता! मुझे तो बस कवित्व अथवा भावुकता ही देना!!१९!!

काव्य एवं नाट्य के उपसेवन से धर्म-अर्थ-कामरूपी त्रिवर्ग के निस्सन्देह सिद्ध हो जाने पर चौथा पुरुषार्थ मोक्ष तो, अपने तीन सहचरों के वियोग से कातर होकर, अपने आप (निष्प्रयत्न) ही सिद्ध हो जाता है।।२०।।

वाजपेयमखैश्चापि भूरिदानसमन्वितैः।
लभ्यं नैव यशोऽक्षय्यं तथा कवितया यथा।।२१।।

**बान्धवौ ननु शब्दार्थौ कविता प्राणवल्लभा।**
**रसो मुक्तिसुखं हन्त किमन्यदिह काङ्क्षितम्??२२।।**

प्रभूत दान से समन्वित 'वाजपेय' यज्ञों के सम्पादन से भी वह अक्षय यश नहीं प्राप्त होने योग्य है जिस प्रकार कि कविकर्म द्वारा।।२१।।

कविता ही जिसकी प्राणवल्लभा हो, शब्द एवं अर्थ (समूह) ही जिसके बन्धु-बान्धव हों, रस ही जिसका मुक्तिसुख हो उस (कवि) के लिये भला और कोई वस्तु काम्य क्या होगी?२२।।

**द्विविधं तावज्जगद्रूपं पाञ्चभौतिकं वाङ्मयञ्च। पाञ्चभौतिकं पृथ्व्याकाशाग्नि-वायुजलनिर्मितं जगद्रूपं यथा सृष्ट्युपक्रमे निर्मीयते तथैव प्रलीयतेऽपि युगान्तवेलायाम्। किञ्च, क्षणभङ्गुरैव भौतिकी सृष्टिरिति शून्यवादिनस्ताथागताः। परन्तु क्षणभङ्गुरे सत्यपि सृष्टिस्थूलरूपेऽवशिष्यते तद्विज्ञानमिति विज्ञानवादिनः।**

**शब्दार्थसमष्टिसंवलितं साहित्यमेव तद् विज्ञानमूलम्। वाङ्मयं साहित्यमित्युभेऽपि पर्यायभूते। यथा शब्दार्थयोः सहितयोर्भावः साहित्यं तथैव शब्दार्थसंवलनाया वाचः प्राचुर्यं वाङ्मयमिति सुखं वक्तुं शक्यते। यथाह महामाहेश्वरोऽभिनवगुप्तपादाचार्योऽधिलोचनम्-वक्तीति वाक्शब्दः। उच्यत इति वागर्थः। उच्यतेऽनयेति वागभिधाव्यापारः। इति।**

संसार का यह स्वरूप दो प्रकार का है-पाञ्चभौतिक अर्थात् क्षिति जल पावक गगन एवं समीर से निर्मित उसका स्थूल रूप जो स्थावर-जंगम के रूप में दृष्टिगोचर हो रहा है, और दूसरा रूप है वाङ्मय अर्थात् शब्दार्थसमष्टिभूत साहित्य में उपनिबद्ध। पाञ्चभौतिक अर्थात् पृथ्वी आदि पञ्चमहाभूतों से निर्मित जगत् का रूप तो सृष्टि के प्रारंभ में जैसे निर्मित होता है, युगान्त वेला में उसी प्रकार प्रलीन (विनष्ट) भी हो जाता है। जैसा कि शून्यवादी बौद्ध दार्शनिकों ने भी कहा है कि भौतिकी सृष्टि क्षणभंगुर ही है। परन्तु सृष्टि के स्थूलरूप के क्षणभंगुर होते हुए भी उसका 'विज्ञान' शेष रह जाता है, ऐसा विज्ञानवादी (बौद्ध) दार्शनिक कहते हैं।

शब्द एवं अर्थ की समष्टि से युक्त साहित्य ही उस विज्ञान का आधार है। वाङ्मय एवं साहित्य-ये दोनों शब्द पर्यायभूत हैं। जैसे परस्पर सम्पृक्त शब्द एवं अर्थ का भाव ही 'साहित्य' है उसी प्रकार शब्दार्थ की संवलना से युक्त वाणी का प्राचुर्य ही 'वाङ्मय' है, ऐसा सरलतापूर्वक कहा जा सकता है।

अपनी (ध्वन्यालोक की) लोचन नाम्नी टीका में महामाहेश्वर आचार्य अभिनवगुप्तपाद ने भी कहा है-जो (अभिप्राय को) व्यक्त करता है वह शब्द ही वाक् है। जो अर्थ प्रकट किया जाता है (शब्द द्वारा) वह अर्थ भी वाक् है और जिस (शब्दशक्ति) के द्वारा शब्द अर्थ को प्रकट करता है वह अभिधाव्यापार भी वाक् ही है।

किञ्च वाङ्मयं जगच्चिरस्थायि विकस्वरञ्चेति यदुच्यते तदपि सत्यं जगतो ब्रह्मरूपत्वात्। यथाऽह भगवान् भर्तृहरिः,

ब्रह्मेदं शब्दनिर्माणं शब्दशक्तिनिबन्धनम्।
विवृतं सर्वमात्राभ्यस्तास्वेव प्रविलीयते।।

अपराश्चापि काश्चन भर्तृहरि-कारिकाः शब्दब्रह्माद्वैतसिद्धान्तमिममवगमयितुं प्रस्तूयन्ते-

अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः।।
एकमेव यदाम्नातं भिन्नं शक्तिव्यपाश्रयात्।
अपृथक्त्वेऽपि शक्तिभ्यः पृथक्त्वेनेव वर्तते।।
अध्याहितकलां यस्य कालशक्तिमुपाश्रिताः।
जन्मादयो विकाराः षट् भावभेदस्य योनयः।।
एकस्य सर्वबीजस्य यस्य चेयमनेकधा।
भोक्तृभोक्तव्यरूपेण भोगरूपेण च स्थितिः।।
शब्दस्य परिणामोऽयमित्याम्नायविदो विदुः।
छन्दोभ्य एव प्रथममिदं विश्वं व्यवर्तत।।

शब्दसंस्कारः एव परमात्मसिद्धिरिति वाक्यपदीयकारः। शब्दसंस्कारवानेव ब्रह्मामृतमश्नुते। यथोक्तम्-

तस्माद्यः शब्दसंस्कारः सा सिद्धिः परमात्मनः।
तस्य प्रवृत्तितत्त्वज्ञस्तद् ब्रह्मामृतमश्नुते।।

लोकोत्तरवचःप्रकर्षैः कविः प्रसह्य सम्मोहयतेऽखिलं जगत्। यथाऽह शिवलीलार्णवकारो नीलकण्ठदीक्षितः-

पुनश्च, वाङ्मय के रूप में अवस्थित जो संसार चिरस्थायी एवं नित्यप्रकाशमान बताया जाता है वह भी सत्य ही है, संसार के ब्रह्ममय होने के कारण। जैसा कि (वाक्यपदीयकार) भगवान् भर्तृहरि ने कहा है-

शब्दनिर्मित स्वरूप तथा शब्द-शक्तियों का निबन्धन करने वाला यह परब्रह्म ही समूचे (नामरूपात्मक) जगत् के रूप में विवृत है और (अन्ततः) उसी में विलीन भी हो जाता है।

इस **शब्दब्रह्माद्वैत** सिद्धान्त को समझाने के लिये भर्तृहरि की कुछ और कारिकायें प्रस्तुत की जा रही हैं-

आदि एवं अन्त से विरहित, कभी भी विनष्ट न होने वाला ब्रह्मस्वरूप जो शब्द तत्त्व है उसी से अर्थस्वरूप जगत् का सारा विस्तार प्रकट होता है।

एक होता हुआ भी जो (विभिन्न) शक्तियों का आश्रय लेने के कारण 'भिन्न' प्रकाशित होता है, वह अपृथक्ता से संवलित होते हुए भी अपनी शक्तियों के माध्यम से पृथक्ता से सम्पृक्त सा दीखता है।

अध्याहित कला वाली जिसकी कालशक्ति का आश्रय प्राप्त कर जन्मादि छह विकार, मात्र भावभेद की योनिमात्र सिद्ध होते हैं।

वह शब्दब्रह्म एक ही है, सर्वबीज-स्वरूप है। परन्तु भोक्ता, भोक्तव्य तथा भोग के रूप में उस एक (अद्वैत) तत्त्व की ही अनेक रूप स्थितियाँ दीखती हैं।

आम्नायविद् आचार्यगण बताते हैं कि यह समूची सृष्टि उस शब्द (ब्रह्म) का ही परिणाम है। छन्दों से ही यह विश्व सर्वप्रथम प्रकट हुआ।

शब्द-संस्कार ही परमात्मतत्त्व की सिद्धि है-ऐसा वाक्यपदीयकार का कहना है। शब्दसंस्कारवान् व्यक्ति ही ब्रह्मामृत को प्राप्त कर पाता है। जैसा कि कहा गया है-इसलिये, जो शब्द-संस्कार है वही परमात्मतत्त्व की सिद्धि है। जो उस प्रवृत्तितत्त्व का ज्ञाता है वही उस ब्रह्मामृत को प्राप्त कर पाता है।

अपने लोकोत्तर वचः प्रकर्ष से कवि अनायास ही सारे जगत् को सम्मोहित कर लेता है। जैसा कि शिवलीलार्णव महाकाव्य के लेखक नीलकण्ठ दीक्षित ने कहा है-

**यानेव शब्दान्वयमालपामो यानेव चार्थान्वयमुल्लिखामः।**
**तैरेव विन्यासविदग्धरीत्या सम्मोहयन्ते कवयो जगन्ति।।**

**त्रयाणां धर्मार्थकामानां वर्गस्त्रिवर्गः। तस्य सिद्धिः काव्यादेव। तथा चाऽग्निपुराणम्-त्रिवर्गसाधनं नाट्यमिति। नाट्यमित्युपलक्षणं काव्यस्यापि। तत उक्तं ग्रन्थकृता त्रिवर्गेऽसंशयं सिद्धे काव्यनाट्योपसेवनैरिति। चतुर्थो**

मोक्षपुरुषार्थः स्वयंसिद्धः प्रतिभाति। स्वसहचरभूतानां धर्मार्थकामानां विरहमसहमान इवेत्युत्प्रेक्ष्यते। लोक एवाऽत्र प्रमाणम्। नियतसहचराणां कश्चिदेकोऽपरेषां विरहं पार्थक्यं वा न सहते।

किञ्च, कवितयाऽक्षय्यं यशोऽवाप्तुं शक्यते। नामशेषतामुपगताः कियन्त एव चक्रवर्तिशास्तारः। परन्तु नित्यजीविता वाल्मीकिव्यासकालिदासादयः। यथाऽह भर्तृहरिः,

जयन्ति ते सुकृतिनो रससिद्धाः कवीश्वराः।
नास्ति येषां यशः काये जरामरणजं भयम्।।

यथा वाऽनन्तदेवानां मन्तव्यमिदम्,
याता यान्ति च यातारो लोकाः शोकाधिका भुवि।
काव्यसम्बन्धिनी कीर्तिः स्थायिनी निरपायिनी।।

जिन किन्हीं शब्दों को (हम) बोलते हैं तथा जिन किन्हीं अभिप्रायों का हम अपनी कविता में उल्लेख करते हैं उन्हीं (शब्दार्थों) के द्वारा हम कविगण, मात्र अभिव्यक्ति की चातुर्यपूर्णरीति के बल पर, सारे जगत् को सम्मोहित कर लेते हैं।

धर्म, अर्थ एवं काम इन तीनों का समवाय ही त्रिवर्ग कहा जाता है। उस त्रिवर्ग की सिद्धि काव्य से ही संभव है। जैसा कि अग्निपुराण में कहा गया है–नाट्य त्रिवर्ग (प्राप्ति) का साधनभूत है। यहाँ 'नाट्य' शब्द काव्य का भी उपलक्षण है, यह तथ्य भी अग्निपुराणकार ने ही बतायाहै–त्रिवर्ग के निस्सन्देह सिद्ध हो जाने पर। कैसे? काव्य एवं नाट्य के उपसेवन से। चौथा जो मोक्ष पुरुषार्थ है, वह अपने आप सिद्ध हुआ सा परिलक्षित होता है। अपने (नित्य) सहचरभूत धर्म, अर्थ तथाकाम के विरह (अलगाव) को न सह पाने के कारण। यह ग्रंथकार के द्वारा उत्प्रेक्षित किया जा रहा है। (कोई भी व्यक्ति अपने नित्य सहचरों से अलग कैसे रह सकता है? अतः काव्यनाट्य के सेवन से यदि धर्म, अर्थ एवं काम सिद्ध हो रहे हैं तो मोक्ष को भी सिद्ध हुआ ही मानिये, मित्रप्रीति के कारण)

इस विषय में लोक ही प्रमाण है। जिनमें नियत साहचर्य है उनमें कोई एक अन्यों का वियोग अथवा अलगाव नहीं ही सहता है।

पुनश्च, कविता द्वारा (ही) अक्षय्य कीर्ति प्राप्त की जा सकती है। कितने ही चक्रवर्ती महीपगण नामशेषता को प्राप्त हो गये। परन्तु वाल्मीकि, व्यास एवं कालिदासादि निरन्तर जीवित हैं। जैसा कि भर्तृहरि ने कहा है–

नित्य विजयशील हैं वे पुण्यवान् रससिद्ध श्रेष्ठ कविगण जिनके यशोविग्रह में वार्द्धक्य एवं मृत्यु से उत्पन्न होने वाले भय संलग्न नहीं हैं।

अथवा जैसा कि अनन्तदेव का यह मन्तव्य-

इस धराधाम में, शोक ही जिनके जीवन में अधिक रहा, ऐसे लोग चले गये, चले जा रहे हैं और (आगे भी) चले जायेंगे। परन्तु कभी भी दूर न होने वाली (कवियों की) काव्य सम्बन्धिनी कीर्ति सदैव स्थिर रहेगी।

## ।।काव्यप्रयोजनप्रकरणम्।।

प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते इति प्राग्वदुक्तिदिशा काव्यप्रणयनेऽपि भवितव्यमेव केनचित्प्रयोजनेन। तत्रादौ पूर्वसूरीणां स्थापना अवलोक्यन्ते। तत्राप्यादौ नाट्यकाव्यैक्यपक्षधरस्याचार्यभरतस्य मतमुपस्थाप्यते। नाट्यशास्त्रस्य प्रथमाध्याय एव भणत्याचार्यः-

धर्म्यं यशस्यमायुष्यं हितं बुद्धिविवर्धनम्।
लोकोपदेशजननं नाट्यमेतद् भविष्यति।।

धर्मार्थकाममोक्षाणामवाप्तिः कलावैचक्षण्यं कीर्तिः प्रीतिश्चैतानि काव्यप्रयोजनानीति भामहाचार्यः-

धर्मार्थकाममोक्षाणां वैचक्षण्यं कलासु च।
करोति कीर्तिं प्रीतिञ्च साधु काव्यनिबन्धनम्।।

प्रीतिकीर्तिमात्रमङ्गीकरोति वामनः काव्यप्रयोजनत्वेन। तद्यथा-काव्यं सद्दृष्टार्थं प्रीतिकीर्तिहेतुत्वात् इति। एतदेव समर्थयते मालवेश्वरो भोजः। यथाऽहासौ सरस्वतीकण्ठाभरणे-

निर्दोषं गुणवत्काव्यमलङ्कारैरलङ् कृतम्।
रसान्वितं कविः कुर्वन् कीर्तिं प्रीतिञ्च विन्दति।।

धर्मादिसाधनोपायो व्यवहारपरिस्पन्दसौन्दर्यमन्तश्चमत्कारश्चेति त्रयं कुन्तकाभिमतं काव्यप्रयोजनं परिलक्ष्यते। तद्यथा-

धर्मादिसाधनोपायः सुकुमारक्रमोदितः।
काव्यबन्धोऽभिजातानां हृदयाह्लादकारकः।।

व्यवहारपरिस्पन्दसौन्दर्यं व्यवहारिभिः।
सत्काव्याधिगमादेव नूतनौचित्यमाप्यते।।

**चतुर्वर्गफलास्वादमप्यतिक्रम्य तद्विदाम्।**
**काव्यामृतरसेनान्तश्चमत्कारो वितन्यते।।**

विना प्रयोजन को सामने रखे मन्द व्यक्ति भी अग्रेसर नहीं होता, इस प्राचीन उक्ति के अनुसार काव्य-रचना में भी कोई न कोई प्रयोजन तो होना (ही) चाहिये। इस सन्दर्भ में सर्वप्रथम, पूर्वाचार्यों की स्थापनाओं (मान्यताओं) को देखते हैं। उनमें भी सर्वप्रथम काव्य एवं नाट्य की एकता के पक्षधर आचार्य भरत का मत उपस्थित किया जा रहा है। नाट्यशास्त्र के प्रथम अध्याय में ही आचार्य कहते हैं-

यह नाट्य धर्मवर्धक, कीर्तिवर्धक, आयुष्यवर्धक, कल्याणकारी, बुद्धिविवर्धक तथा लोक को उपदेशकारक (मार्गदर्शक) होगा।

धर्म, अर्थ, काम एवं मोक्ष की प्राप्ति, चतुष्षष्टि कलाओं में पारंगतता, कीर्ति एवं लोकानुराग ही काव्य के प्रयोजन हैं ऐसा भामहाचार्य कहते हैं-

उत्कृष्ट कोटि की काव्यरचना (रचनाकार को) प्रदान करती है-लोकयश, लोकानुराग, कलाओं में विचक्षणता तथा पुरुषार्थ-चतुष्टय की सिद्धि!

आचार्य वामन काव्य-प्रयोजन के रूप में मात्र प्रीति एवं कीर्ति को स्वीकार करते हैं-सहृदयों द्वारा अनुशीलित अर्थ वाला होता है काव्य, प्रीति एवं कीर्तिरूप प्रयोजनों से युक्त होने के कारण।

मालवेश्वर भोजदेव भी इसी का समर्थन करते हैं। जैसा कि उन्होंने सरस्वतीकण्ठाभरण में कहा है-दोषों से रहित, माधुर्यादि गुणों से युक्त, अलंकारों से अलंकृत तथा रसों से समन्वित काव्य का प्रणयन करने वाला कवि कीर्ति एवं प्रीति (पाठकों का प्रेम) प्राप्त करता है।

धर्मादि पुरुषार्थों का साधनभूत उपाय, व्यवहार-निर्वाह की प्रशस्त रीति (का ज्ञान) तथा आन्तराह्लाद-यही तीन काव्यप्रयोजन आचार्य कुन्तक को भी अभीष्ट प्रतीत होते हैं-

सुकुमार पद्धति से अभिव्यक्त तथा धर्मादि पुरुषार्थों (की प्राप्ति) का साधनोपायभूत काव्यबन्ध अभिजातों (परिष्कृत अभिरुचि सम्पन्न जनों) का हृदयाह्लादकारक होता है।

श्रेष्ठकाव्य के परिशीलन से ही अभिनव औचित्य वाली वह आचरण पद्धति की प्रशस्तता प्राप्त हो जाती है जो हम औरों के साथ सम्पन्न करते हैं।

पुरुषार्थ–चतुष्टय में पारंगत जनो का जो चतुर्वर्ग का फलस्वाद है उसको भी अतिक्रान्त कर काव्यामृतरस द्वारा (एक विलक्षण) अन्तश्चमत्कार प्रदान किया जाता है।

वाग्भटस्तु प्राचां काव्यप्रयोजनषट्कं वर्णयन्नपि कीर्तीतराणि पञ्च साधनान्तरैः प्राप्तव्यानि मन्वानः कीर्तिमात्रैकप्रयोजने काव्ये श्रद्दधाति। स आह–वयं तु कीर्तिमेवैकां काव्यहेतुतया मन्यामह इति। चतुर्वर्गफलप्राप्तिः सुखादल्पधियामपि काव्यादेवेति साहित्यदर्पणकारः। तत्र कीर्तिपरमाह्लाद–गुरुराजदेवताप्रसादाद्यनेकप्रयोजनकस्य काव्यस्येति प्रतिपादयन् पण्डित–राजोऽपि कीर्त्याह्लादानुकम्पात्रितयमेव काव्यप्रयोजनभूतं मनुते।

काव्यप्रकाशकारो मम्मटस्तु नाट्यशास्त्रोदितमेव काव्यप्रयोजनजातं सपरिष्कारं प्रस्तौति–

काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये।
सद्यः परिनिर्वृतये कान्तासम्मिततयोपदेशयुजे।।

अत्रोच्यते। कामं केषाञ्चित्कवीनां काव्यरचनयाऽर्थप्राप्तिस्सम्भवेत् न पुनस्समेषाम्। न सर्वे कवयः प्रागधुना वा राजाश्रयिणः। अथ च धनप्राप्तिनिमित्तमेव काव्यं प्रणयतः कवेः क्व स्वाभिमानः क्व चाऽप्यलालाटिकत्वम्? दिल्लीश्वरो वा जगदीश्वरो वेत्युक्त्या दिल्लीश्वरं निजाश्रयदातारं शाहजहानं महामहिमशालिना जगदीश्वरेण सार्धं समीकुर्वन् पण्डितराजोऽपि च्युतगौरव एव परिलक्ष्यते। प्रकृत्यैव निरीहः कविः। निरीहाणामीशस्तृणमिव तिरस्कारविषय इत्यपि श्रुतमस्माभिः। मनसि च परितुष्टे कोऽर्थवान् को दरिद्रः? आत्मारामतया जीवतां कवितल्लजानां क्वाऽपरितोषः?

आचार्य वाग्भट, प्राचीन आचार्यों को अभिमत छह काव्य प्रयोजनों को वर्णित करते हुए भी, उनमें से पाँच को साधनान्तर से प्राप्त होने योग्य मानते हुए, कीर्तिमात्र प्रयोजन वाले काव्य के प्रति श्रद्धा व्यक्त करते हैं। वह कहते हैं–हम तो एकमात्र कीर्ति को ही काव्य–प्रयोजन के रूप में स्वीकार करते हैं।

साहित्यदर्पणकार आचार्य विश्वनाथ कहते हैं–अल्पबुद्धि वालों को भी सरलतापूर्वक चतुर्वर्ग की फलप्राप्ति काव्य से ही होनी संभव है।

'कीर्ति, परमाह्लाद तथा गुरु, राजा एवं देवता का अनुग्रह आदि अनेक

प्रयोजन वाला होता है काव्य'–ऐसा प्रतिपादित करने वाले पण्डितराज जगन्नाथ भी कीर्ति, परमानन्द एवं त्रिविध अनुकम्पा को काव्य-प्रयोजन मानते हैं।

काव्यप्रकाशकार आचार्य मम्मट तो नाट्यशास्त्रकार द्वारा बताये गये काव्य-प्रयोजनों को ही (थोड़े) परिष्कार के साथ स्वीकार करते हैं–

काव्य होता है यश के लिये, अर्थप्राप्ति के लिये, व्यवहारज्ञान के लिये, शिवेतर (अमंगल) के विनाश के लिये, तात्कालिक आनन्दानुभूति के लिये तथा कान्तासम्मित उपदेश के लिये!

अब अपना मन्तव्य प्रस्तुत है। भले ही कुछ कवियों को काव्यरचना से अर्थप्राप्ति होनी संभव हो, परन्तु सबको नहीं होती। न पूर्व में ही सभी कवि राजाश्रयी होते थे, न आज ही राजाश्रयी हैं। और फिर, धनप्राप्ति मात्र के लिये काव्य-प्रणयन करने वाले कवि का स्वाभिमान कहाँ रहा औरकहाँ रही उसकी निरीहता? मेरे लिये तो दिल्लीश्वर हैं या फिर जगदीश्वर' इस उक्ति के द्वारा अपने आश्रयदाता दिल्लीश्वर शहंशाह शाहजहाँ की महामहिमशाली जगदीश्वर के साथ तुलना करते हुए पण्डितराज जगन्नाथ भी गौरवच्युत ही परिलक्षित होते हैं। कवि तो स्वभावतः निरीह (निराकांक्ष, निर्लोभ) होता है। ऐसे निरीहों के लिये तो राजे-महराजे भी तिनके के समान तिरस्कार के विषय हुआ करते हैं–यह भी हमने सुन रखा है। और, मन के परितुष्ट रहने पर भला कौन धनी है और कौन दरिद्र? आत्माराम जीवन जीने वाले श्रेष्ठ कवियों के जीवन में असन्तोष कहाँ?

शिवेतरक्षतिप्रसङ्गोऽपि क्वाचित्कः कादाचित्कश्च। देवाराधनपराणां स्तोत्रादीनां रचनया शिवेतरक्षतिः केषाञ्चित्कवीनामजायतेति स्वीकृतेऽपि तस्याः काव्यप्रयोजनौचित्यं सङ्कीर्णमेव परिलक्ष्यते। न च महाकाव्यखण्ड-काव्यचम्पू-दशरूपकादीनि सर्वाणि देवताराधनपराणि। प्रहसनं तु बण्डभण्डेतिवृत्तप्रधानम्। भाणोऽपि वेशवाटवर्णने पर्यवसितः। दामोदरगुप्तप्रणीते कुट्टनीमते कुट्टन्या एव चरितम्। क्षेमेन्द्रप्रणीते कला-विलासे स्वयुगीनसमाजस्य दुष्प्रवृत्तय एव वर्णिताः। एवं हि सहस्त्रधारता-मुपगते काव्यवर्ण्यविषये स्तोत्रमात्रसाध्या शिवेतरक्षतिः कथं काव्य-प्रयोजनीभवितुं शक्नोति?

काव्यपरिशीलनेन सद्यः परिनिर्वृतिरपि पाठकस्य श्रोतुर्वा सहृदय-तामपेक्षते। असहृदयः काव्यार्थावगमेऽशक्तो नातिपरिपुष्टविद्यासंस्कारश्च

**कथं काव्यश्रवणसमकालमेव परिनिर्वृतिमुपगच्छेत्? विशेषतः प्रतीयमानार्थप्रधाने काव्ये नैतत्सम्भवति। यथा वा भणति धनददेवः-**

**कवयः परितुष्यन्ति नेतरे कविसूक्तिभिः।**
**नह्यकूपारवत्कूपा वर्धन्ते विधुकान्तिभिः।।**

**यथा वा शार्ङ्गधरपद्धतावुद्धतं महाकविबाणभट्टपद्यम्-**

**मुखमात्रेण काव्यस्य करोत्यहृदयो जनः।**
**छायामच्छामपि श्यामां राहुस्तारापतेरिव।।**

शिवेतर-क्षति का सन्दर्भ भी स्थानविशेष एवं समयविशेष में सीमित है। यदि यह मान भी लिया जाय कि देवाराधना से युक्त स्तोत्रादिकों की रचना से कुछेक कवियों का अमंगल टल गया तो भी उसका काव्यप्रयोजनौचित्य संकीर्ण ही प्रतीत होता है। महाकाव्य, खण्डकाव्य, चम्पू, दशरूपकादि सबके सब तो देवाराधनपरक हैं नहीं। प्रहसन तो बण्ड-भण्ड प्रधान (लुच्चे-लफंगों की प्रचुरता वाला) ही होता है। भाणकृतियाँ भी वेशवाट के वर्णन में ही पर्यवसित हैं। दामोदरगुप्त-प्रणीत **कुट्टनीमतम्** में तो कुट्टनी का ही चरित उपनिबद्ध है। क्षेमेन्द्रप्रणीत **कलाविलास** में स्वयुगीन (काश्मीरक) समाज की दुष्प्रवृत्तियाँ ही वर्णित हैं।

इस प्रकार, काव्यों का वर्ण्य-विषय (प्रतिपाद्य) हजारों धाराओं में विभक्त होने के कारण, स्तोत्रमात्र से साध्य शिवेतरक्षति को काव्य-प्रयोजन कैसे माना जा सकता है?

काव्य के परिशीलन (पारायण) से तात्कालिक आनन्द की अनुभूति भी पाठक अथवा श्रोता की सहृदयता की अपेक्षा करती है। जो अ-सहृदय है, काव्यार्थ को हृदयंगम कर पाने में अशक्त है, अत्यधिक परिपुष्ट विद्या-संस्कार वाला नहीं है, वह भला कैसे काव्य को सुनते ही सुनते आह्लादित हो उठेगा? विशेष कर, व्यङ्ग्यार्थ-प्रधान काव्य में तो यह संभव ही नहीं। जैसा कि धनददेव ने कहा है-

कवियों के सुभाषितों से (सहृदय) कवि ही परितुष्ट हो जाते हैं, और लोग नहीं। चन्द्रकिरणों के दर्शनमात्र से समुद्र की तरह कुएँ में उफान नहीं आ जाता।

अथवा जैसा कि शार्ङ्गधरपद्धति में महाकवि बाणभट्ट का यह पद्य उदाहृत किया गया है-असहृदय व्यक्ति मुख मात्र से काव्य पढ़ता है। परन्तु उस

काव्यार्थ की उसे समझ थोड़े न होती है ! तारापति चन्द्रमा की निर्मल कान्ति को भी राहु कलंकित ही करता है। (मुँह लगा कर)

व्यवहारज्ञानं यद्युच्यते काव्यप्रयोजनं न तत्र कस्यापि वैमत्यम्। परन्तु काव्यानुशीलनेन व्यवहारज्ञानं कस्य जायते? प्रणेतुः कवेः पाठकस्य श्रोतुर्वा? न चन्द्रस्तथा चन्द्रिकासौख्यमनुभवति यथा लोकः। न प्रदीपः स्वयमेव प्रभयोपक्रियते। अनेन एतदुक्तं भवति यत्काव्येन व्यवहारज्ञानं पाठकस्यैव जायते न काव्यकारस्य। काव्यकारोऽपि पाठकीभूयैव व्यवहारज्ञानमवाप्तुं शक्नोतीति मन्मतम्। एवं सति, काव्यप्रणयने व्यवहारज्ञानस्यापि प्रयोजनत्वं सन्दिग्धमेव प्रतीयते।

यदुक्तमाचार्यमम्मटेन कान्तासम्मिततयोपदेशयुज इति तदप्यपेक्षा-बुद्ध्यैवेति मन्ये। वेदशास्त्रनीतिशास्त्रयोः प्रभुमित्रसम्मितोपदेशपरायण-योरपेक्षया कामं काव्यं कान्तासम्मितमुपदेशं दद्यात् परन्तु काव्यं सदपि रावणवधमहाकाव्यं भट्टिप्रणीतं प्रभुसम्मितपद्धत्यैव व्याकरणमनुशास्ति। राघवपाण्डवीये कविराजप्रणीते राघवनैषधीये हरदत्तसूरिप्रणीते राघव-पाण्डवनैषधीये चिदम्बरसुमतिप्रणीते किञ्च, मेघविजयोपाध्यायप्रणीते सप्तसन्धानमहाकाव्ये श्लेषप्रयोगग्रहिले क्व नु कान्तासम्मितोपदेशत्वम्?

एवं हि, यश एवैकं स्थिरमनवद्यञ्च प्रयोजनं परिलक्ष्यते काव्य-रचनायाः। यदाह वाग्भटः वयं तु कीर्तिमेवैकां काव्यहेतुतया मन्यामह इति तदेव ममाऽप्यभीष्टमिति वक्तुमुत्सहे। सततं कीर्तयन्तो मामिति श्रीमद्भगवद्गीतायां समुपदिशतो भगवतोऽपि यशस्येव पक्षपातः परिलक्ष्यते। मद्भक्ता यत्र गायन्ति तत्र तिष्ठामि नारद इत्यसौ स्वयमेवाऽपरत्र समुद्घोषयति।

यदि व्यवहारज्ञान को काव्य का प्रयोजन बताते हैं तो उसमें किसी की विमति नहीं। परन्तु काव्य के अनुशीलन से किसे व्यवहारज्ञान होता है? प्रणेता कवि को, पाठक को अथवा श्रोता को? चन्द्रमा स्वयं उस प्रकार चाँदनी के सुख का अनुभव नहीं करता जिस प्रकार कि लोक ! दीपक स्वयं अपनी प्रभा से उपकृत नहीं होता है। (उपकृत तो होता है लोक जिसे वह प्रकाश देता है) इसका यही अभिप्राय निकला कि काव्यानुशीलन से व्यवहार-ज्ञान पाठकों को ही होता है न कि (स्वयं) काव्यकार को।

काव्यकार (कवि) को भी यदि व्यवहार-ज्ञान होना संभव है तो (अपने

ही) काव्य का पाठक बन कर ही–यह मेरा अपना मन्तव्य है। ऐसी स्थिति में, व्यवहार–ज्ञान का भी काव्य–प्रयोजनत्व सन्दिग्ध ही प्रतीत होता है।

और जो आचार्य मम्मट ने कहा कि कान्तासम्मित उपदेश की शिक्षा देना काव्य का प्रयोजन है तो मैं मानता हूँ कि वह भी अपेक्षा–बुद्धि से ही कहा गया है। प्रभुसम्मित तथा मित्रसम्मित शैली में उपदेश देने वाले वेदशास्त्र एवं नीतिशास्त्र की तुलना में भले ही काव्य कान्तासम्मित शैली में उपदेश देता हो परन्तु काव्य होते हुए भी, भट्टि–प्रणीत रावणवध महाकाव्य प्रभुसम्मित पद्धति से ही व्याकरण सिखाता है। कविराज–प्रणीत राघवपाण्डवीय में, हरदत्तसूरि–प्रणीत राघवनैषधीय में, चिदम्बर सुमति–प्रणीत राघवपाण्डवनैषधीय में, पुनश्च मेधविजयोपाध्याय–प्रणीत सप्तसन्धान महाकाव्य में, जो कि श्लेषालंकारप्रयोग–ग्रहिल है, भला कान्तासम्मित शैली के उपदेश का अवकाश कहाँ?

इस प्रकार, एकमात्र **यश** ही स्थायी तथा अनवद्य (असंकीर्ण) प्रयोजन परिलक्षित होता है काव्य–रचना का जैसा कि आचार्य वाग्भट ने कहा कि हम तो एकमात्र कीर्ति को ही काव्यप्रयोजनतया स्वीकार करते हैं, वही मेरा भी अभीष्ट मन्तव्य है, ऐसा मैं कहना चाहता हूँ।

निरन्तर मेरा कीर्तन करते हुए (जो भक्त मेरी उपासना करते हैं आदि) इस प्रकार श्रीमद्भगवद्गीता में समुपदेश देते हुए भगवान् कृष्ण का भी 'कीर्ति' के ही प्रति पक्षपात प्रकट होता है।

मेरे भक्त जहाँ मेरा गुणगान करते हैं, नारद! मैं वहीं रहता हूँ, ऐसा वह स्वयं उद्घोषित करते हैं एक दूसरे सन्दर्भ में।

**किञ्च, परमार्थतस्तु यशोऽपि काव्यप्रयोजनत्वेनाङ्गीकर्तुं न युज्यते। एवंवादिनो न मे पूर्वपरम्पराविरोधे काऽप्यासक्तिर्मन्तव्या। सत्यप्रतिष्ठापने नाऽस्माभिर्गताऽनुगतिकैर्भाव्यम्। अन्यथाऽवरुद्धपरीवाहपल्वलकल्पं नित्यचिन्तनं शास्त्रं नामशेषतामुपयास्यति। तदयुक्तमित्याचार्याः सनातन–महाभागा नाट्यानुशासने–**

**मुनीनां भारतीयानां सम्मतो लोकसंग्रहः।**
**स्फीतो बुद्धिगुणस्तेषां काऽत्र ग्राह्यस्य वर्णना।।**

**नाऽस्माकं भारतीयानां चेतना म्रियते क्वचित्।**
**सा सदा वर्तमानस्य स्वागतादेव जीवति।।**

मक्षिका मक्षिकास्थाने निवेशयितुमिष्यते।
केन वा तत्त्वविज्ञाननिविष्टमति चक्षुषा??

केन वा मूलविच्छेदोऽप्याद्रियेत सुमेधसा।
स्वालक्षण्यं विना का नु प्रतिष्ठा शिल्पवेधसाम्।।

तस्मात् परम्परा सर्वैः पालनीया मनीषिभिः।
नवीनतमसामग्री-संग्रहे दर्शितादरैः।।

भूयस्स एवाह स्वोपज्ञे भरतदर्शने-

अतीतमात्रे सश्रद्धास्तिष्ठन्त्वत्र तु ते जनाः।
येषां सपिण्डनं नास्ति सत्त्वं येभ्यः शवेष्वपि।।

सन्ततिं तु वयं नूत्नप्रत्नाद्वैतप्रवाहिणीम्।
समाद्रियामहे काण्डच्छदद्रुमनयादृताः।।

पुनश्च, पारमार्थिक रूप से यश अथवा कीर्ति को भी काव्य-प्रयोजन के रूप में स्वीकारना उचित नहीं प्रतीत होता। जब मैं ऐसा कह रहा हूँ तो पूर्वपरम्परा के विरोध में मेरी कोई आसक्ति नही मानी जानी चाहिये। वस्तुतः सत्य की प्रतिष्ठापना में हमें गताऽनुगतिक (परम्परावादी) नहीं होना चाहिये। अन्यथा अवरुद्ध जलप्रवाह वाली बावड़ी की तरह शास्त्र भी, जिसमें नित्यचिन्तन (प्रवाह) होना चाहिये, विनष्ट ही हो जायेगा। ऐसा होना उचित नहीं है, जैसा कि आचार्य सनातन महोदय अपने नाट्यानुशासन में कहते हैं-

भारतीय मुनियों (विचारकों) के लिये लोकसंग्रह सम्मत विषय रहा है। उनकी बुद्धि में संकीर्णता नहीं। उनके लिये 'ग्राह्य' के प्रति वर्जना का भाव कैसा?

हम भारतीयों की चेतना कभी मरती नहीं है। वह 'वर्तमान' के स्वागत-अभिनन्दन से ही सदैव जीवित रही है।

तत्त्वविज्ञान में डूबी बुद्धिरूपी दृष्टि वाला भला कौन ऐसा (विद्वान्) होगा जो मक्खी के स्थान पर मक्खी रखना चाहेगा?

अथवा कौन ऐसा महामेधावी होगा जो मूल (परम्परा) के समुच्छेद का आदर करेगा? जो शिल्पवेधा हैं (कलापण्डित हैं) उनकी प्रतिष्ठा 'स्वालक्षण्य' के विना कहाँ?

इसलिये परम्परा का पालन तो समस्त मनीषियों को करना ही चाहिये। उन मनीषियों को जो नवीनतम सामग्री के संग्रह के प्रति आदर प्रदर्शित करते हैं।

स्वरचित ग्रन्थ **भरतदर्शन** में एक बार पुनः वह कहते हैं–

अतीत मात्र के प्रति वे लोग श्रद्धावान् बने रहें इस संसार में, जिनका सपिण्डन (वर्तमान पीढी से सम्बन्ध) संभव न हो, जिनके लिये शवों में भी सत्त्व विद्यमान रहता हो।

हम तो नूतन एवं पुरातन के अद्वैत-प्रवाह वाली परम्परा का समादर करते हैं-पर्ण, स्कन्ध एवं वृक्ष की सम्पृक्तता के प्रति आस्थावान् बन कर।

**एवं हि, परम्पराऽनुपालनपरेणाऽपि मया स्वाभिप्रायोऽभिनवः प्रकाश्यते। तद्यथा–**

**न धनाय न पुण्याय व्यवहाराय नाऽपि वा।**
**न च सद्यः सुखार्थाय काव्यं निर्मात्ययं कविः।।२३।।**

**वस्तुतस्तस्य कर्मैतत् संस्कारोत्थं स्वभावजम्।**
**यदकृत्वा क्षणं यावन्नासौ शमधिगच्छति।।२४।।**

**यथा नोत्पतितुं शक्तो भ्रमरो गुञ्जनादृते।**
**तथा कविरयं काव्यादृते शक्तो न जीवितुम्।।२५।।**

**काव्यमेतत्ततो मन्ये कविकर्म स्वभावजम्।**
**जन्मजन्मान्तराऽवाप्तदिव्यसंस्कारसत्फलम्।।२६।।**

**यन्निसर्गाद्बहिर्भूतं तद्भवेत्सप्रयोजनम्।**
**निसर्गे क्व पुनस्तस्य चर्चाऽनास्थाविवर्धिनी।।२७।।**

**पश्यन्त्येव यदि प्राज्ञाः काव्यसृष्टौ प्रयोजनम्।**
**परत्रेह च निर्व्याजं यशस्तन्मेऽभिरोचते।।२८।।**

**न च काव्येतरत्कृत्यं किमप्येतादृशं भुवि।**
**यदत्र परलोके च यशश्शाश्वतमर्जयेत्।।२९।।**

**यच्च ध्वनिकारेणोक्तं सहृदयहृदयाह्लादिशब्दार्थमयत्वमेव काव्यत्व-लक्षणमिति तद्युक्तमेव। सहृदयानां हृदयाह्लाद एव काव्यप्रयोजनम्। परन्त्वसावाह्लादः सहृदयानां लोकोत्तराख्यानेन जायते, कवेराह्लादस्तु सहृदयसमज्योपायनीकृतयशोभिरेव, नान्यथा। यदि कीर्तिमात्रेण कवेराह्लादो नाभविष्यत्तर्हि सहृदयोत्थनिन्दामपि निपीय तेषामाह्लादप्रसङ्गः प्रसजेत्। तन्न। अत्र कौलीनोद्विग्नो महाकविभवभूतिरेव प्रमाणम्–**

ये नाम केचिदिह नः प्रथयन्त्यवज्ञां
जानन्ति ते किमपि तान् प्रति नैष यत्नः।
उत्पत्स्यते हि मम कोऽपि समानधर्मा
कालो ह्ययं निरवधिर्विपुला च पृथ्वी।।

तदयमत्र संक्षेपो यद् व्यवहारदृष्ट्या यश एव काव्यरचनाप्रयोजनभूतं तिष्ठति। परमार्थदृष्ट्या तु काव्यप्रणयनं कवेः स्वतः स्फूर्तं स्वाभाविक-कर्ममात्रम्। स्वाभाविकं कर्म न भवति कथमपि प्रयोजनसापेक्षम्।

इस प्रकार, परम्पराऽनुपालन के प्रति आस्थालु होते हुए भी मैं अपना अभिनव (व्यक्तिगत) अभिप्राय प्रस्तुत कर रहा हूँ। जैसा कि,

यह कवि न धन के लिये, न पुण्यलाभ के लिये, और न ही व्यवहारज्ञान के लिये, और न ही तात्कालिक आनन्द-प्राप्ति के लिये काव्य का प्रणयन करता है।।२३।।

वस्तुतः यह काव्यरचना उसका पूर्वजन्म के संस्कारों से प्रबुद्ध, स्वभावज कर्म है जिसे न सम्पन्न कर (जिससे विरत होकर) वह क्षण भर भी शान्ति का अनुभव नहीं कर सकता।।२४।।

जैसे विना गुञ्जन प्रकट किये भ्रमर उड़ पाने में समर्थ नहीं होता (वह गुनगुनाते हुए ही उड़ता है) उसी प्रकार यह कवि भी कविकर्म के विना जी नहीं सकता।।२५।।

इसलिये मैं इस काव्य को निसर्गजात कविकर्म मानता हूँ जो कि जन्म-जन्मान्तर से प्राप्त होने वाले दिव्य संस्कारों का श्रेष्ठ फल है।।२६।।

जो वस्तु (मनुष्य के) निसर्ग या स्वभाव से बहिर्भूत हो (नैसर्गिक या स्वाभाविक न हो) वह भले ही प्रयोजन से युक्त हो (अर्थात् अस्वाभाविक कार्य तो सप्रयोजन होगा ही) परन्तु स्वभावजन्य कार्य के सन्दर्भ में अनास्था बढ़ाने वाली उस प्रयोजन की कैसी चर्चा? (भूख, नींद, प्यास आदि नैसर्गिक हैं, इनका भला कोई प्रयोजन होता है?।।२७।।

परन्तु विद्वज्जन यदि काव्यरचना के सन्दर्भ में कोई प्रयोजन देखना ही चाहते हैं तो फिर (वह प्रयोजन) एकमात्र यश ही मुझे अभीष्ट प्रतीत होता है जो कि लोक एवं परलोक-दोनों में अभिप्रेत होता है।।२८।।

कविकर्म से इतर, कुछ भी ऐसा भूलोक में नहीं हैं जो कि इहलोक तथा परलोक में शाश्वत कीर्ति का अर्जन कर सके।।२९।।

और जो ध्वनिकार **आनन्दवर्धन** ने कहा–'सहृदयों के हृदयों का आह्लादन करने वाले शब्दों एवं अर्थों से समनुगत होना ही काव्यत्व का लक्षण है' वह ठीक ही कहा। सहृदयों का हृदयाह्लादन ही काव्य का प्रयोजन है। परन्तु सहृदयों का वह हृदयाह्लाद लोकोत्तर आख्यान (वर्णन) से ही संभव हो पाता है। कवि का आह्लाद तो सहृदयों (रसिकों) की गोष्ठी द्वारा की गई 'वाहवाही' (प्रशंसा अथवा कीर्ति) से ही होता है, अन्य किसी प्रकार से नहीं।

यदि कीर्तिमात्र (की प्राप्ति) से कवि को आह्लाद न होता तो सहृदयों द्वारा की गई निन्दाओं को भी सुनकर, उनको आह्लाद ही होता। परन्तु ऐसा नहीं है। इस सन्दर्भ में तो लोकनिन्दा से उद्विग्न महाकवि भवभूति ही प्रमाण हैं–

जो कुछेक लोग मेरे प्रति अवज्ञा (निन्दा) प्रकट कर रहे हैं, वे क्या कविता का अर्थ जानते भी हैं? मेरा प्रयत्न उनके प्रति नहीं है। अरे पैदा होगा कोई (मेरे काव्यमर्म को समझने वाला) मेरा समानधर्मा! क्योंकि निस्सीम है यह कालप्रवाह और बहुत विशाल है यह पृथ्वी!

तो फिर यही निष्कर्ष रहा कि व्यावहारिक दृष्टि से एकमात्र यश ही काव्यरचना का प्रयोजनभूत सिद्ध है। पारमार्थिक दृष्टि से तो काव्यरचना कवि का स्वतः प्रकट होने वाला, स्वाभाविक कर्ममात्र है और स्वाभाविक कार्य, किसी भी प्रकार, प्रयोजन–सापेक्ष नहीं होता।

**यच्चाऽभिनवकाव्यालङ्कारसूत्रकृता राधावल्लभेनोक्तं मुक्तिस्तस्य प्रयोजनमिति ( अभि० १।२।१ ) तत्कथं सम्भवतीति पृच्छामः। त्रिवर्गसाधनं नाट्यमिति प्रसिद्धम्। नाट्यमत्र काव्यस्याप्युपलक्षणम्। मोक्षसिद्धिस्तु काव्यनाट्याभ्यामानुषङ्गिक्येव न पुनस्साक्षाद्रीत्या। काव्यप्रयोजनैः सर्वैरपि सम्प्राप्तजीवनोपभोग्यैरेव भवितव्यम्। यशोऽर्थव्यवहारज्ञानशिवेतरक्षति-सद्यःपरिनिर्वृतिकान्तासम्मितोपदेशाख्यानि सर्वाण्यपि प्रयोजनानि इहजीवनोपभोग्यान्येव। किन्तु मुक्तिसौख्यं मरणानन्तरमेवोपभोक्तुं शक्यते। तत्कथं तस्याः काव्यप्रयोजनत्वं सम्भवतीति कोविदैश्चिन्त्यम्।**

और जो अभिनवकाव्यालंकारसूत्रकार राधावल्लभ ने कहा–मुक्ति उस (काव्य) का प्रयोजन है, तो पूछता हूँ कि वह कैसे सम्भव है? नाट्य त्रिवर्ग (धर्म, अर्थ, काम) का साधन है, यह प्रसिद्ध है। यहाँ नाट्य काव्य का भी

इस प्रकार, कुन्तक एवं क्षेमेन्द्र द्वारा प्रवर्तित काव्यात्म-सिद्धान्त निश्चित रूप से (अब) समुत्पन्न-दिवंगत (पैदा होकर मर गये) ही प्रतीत होते हैं।।२९।।

(वस्तुतः) ध्वनि-सम्प्रदाय में सत्साहिती के जो गुण विद्यमान हैं वे न वक्रोक्ति में हैं और नहीं औचित्य में।।३०।।

सच तो यह है कि पूर्ववर्ती काव्यात्म-सम्प्रदायों (रस, अलंकार तथा रीति) को स्वीकार न करने के जैसे कारण (मूलग्रंथ) ध्वन्यालोक में उपलब्ध होते हैं अथवा ध्वनिपक्षधर अन्यान्य परवर्ती टीकाकारों अथवा आचार्यों के ग्रंथों में मिलते हैं, वैसे कुन्तक एवं क्षेमेन्द्र के ग्रंथों में नहीं (कि वे रस, अलंकार, रीति तथा ध्वनि को काव्यात्मा क्यों नहीं मान रहे!)

पुनश्च, इन दोनों का कोई ऐसा (समसामयिक अथवा परवर्ती) समर्थक भी नहीं जो वक्रोक्ति एवं औचित्य (को काव्यात्मा मानने) के विरुद्ध उठी विप्रतिप्रतियों का समाधान कर सका हो। इसीलिये कहा जा रहा है कि ये दोनो सिद्धान्त पैदा भी हुए और कालकवलित भी हो गये। महल कितना ही आलीशान क्यों न हो, संरक्षण के अभाव में धराशायी तो हो ही जाता है।

**औचित्यमपि तावत्पूर्वपरिचितं सूरिव्याख्यातं काव्यतत्त्वम्। तस्यापि सुविदितान्तस्तत्त्वस्य विषयस्य विलक्षणीकरणप्रयासो मुधैव प्रतीयते।**

**आनन्दवर्धनात्प्रागपि तदिदमौचित्यतत्त्वं विमृष्टमासीदाचार्यैः। भामहदण्ड्युद्भटादयो दोषव्याजेनौचित्यं समुपदिशन्ति। परन्तु ध्वनिकारस्तु विविधैः सन्दर्भैरौचित्यस्य माहात्म्यं सश्रद्धमाख्याति। तद्यथा-**

**अनौचित्यादृते नाऽन्यद्रसभङ्गस्य कारणम्।**
**औचित्योपनिबन्धस्तु रसस्योपनिषत्परा।।**

**वाच्यानां वाचकानां च यदौचित्येन योजनम्।**
**रसादिविषयेणैतन्मुख्यं कर्म महाकवेः।।**

**रसाद्यनुगुणत्वेन व्यवहारोऽथ शब्दयोः।**
**औचित्यवान्यस्ता एता वृत्तयो द्विविधाः स्मृताः।।**

**-ध्वन्या० तृतीयोद्योतः।**

औचित्य भी तो पूर्वपरिचित तथा आचार्यों द्वारा व्याख्यात काव्यतत्त्व है। उस (जाने-बूझे) औचित्य का भी - एक ऐसा विषय जिसका रहस्य समुद्भिन्न हो चुका है, विलक्षण काव्यतत्त्व सिद्ध करने का प्रयास निरर्थक ही प्रतीत होता है।

आनन्दवर्धन से पूर्व भी यह औचित्यतत्त्व आचार्यों द्वारा समीक्षित किया

जा चुका था। भामह, दण्डी तथा उद्भट आदि, दोष के बहाने, औचित्य की चर्चा करते हैं। परन्तु ध्वनिकार तो विविध सन्दर्भों द्वारा, औचित्य का माहात्म्य, बड़ी श्रद्धा के साथ प्रतिपादित करते हैं। उन्हीं के शब्दों में-

अनौचित्य के अतिरिक्त रसभंग का और कोई कारण नहीं होता है। औचित्य का उपनिबन्धन ही रस का प्राणतत्त्व है।

रसादि (अर्थात् भाव, भावसन्धि, भावोदय, भावशबलता एवं भावप्रशमादि) को विषय (लक्ष्य) बनाकर वाच्य अर्थों तथा वाचक शब्दों की जो औचित्य-दृष्ट्या योजना होती है, वही महाकवि का मुख्य कर्म है।

रसादि की अनुकूलता को दृष्टि में रखकर, शब्द एवं अर्थ का जहाँ औचित्य की दृष्टि से व्यवहार किया जाता है, वे ये वृत्तियाँ दो प्रकार की बताई गई हैं।-ध्वन्या० तृतीयोद्योत।

निखिलेऽपि तृतीयोद्योते ध्वनिकारो विविधदृशौचित्यमाहात्म्यमेव प्रतिपादयति। तन्मतसारांशोऽत्र प्रस्तूयते-

विविधाः काममैतिह्ये कथाः सन्तु रसाश्रिताः।
विभावाद्यौचितीयुक्तं तथाप्यंशं ततो हरेत्।।३१।।

स्वेच्छापि चेत्कवेः काचिद् भवेद्रसविरोधिनी।
सा न योज्येतिहासार्थैः कथामार्गव्यतिक्रमात्।।३२।।

अत्राऽनूदितम्मया ध्वनिकारस्यैव वचनम्। अस्मिन् सन्दर्भे स्वयमेवाऽऽनन्दवर्धनः कथयति-कविना प्रबन्धमुपनिबध्नता सर्वात्मना रसपरतन्त्रेण भवितव्यम्। तत्रेतिवृत्ते यदि रसाननुगुणां स्थितिं पश्येत्तां भङ्क्त्वापि स्वतन्त्रतया रसानुगुणं कथान्तरमुत्पादयेत्। नहि कवेरितिवृत्तमात्रनिर्वहणेन किञ्चित्प्रयोजनम्। इतिहासादेव तत्सिद्धेः।-ध्वन्या० ३।१४ वृत्तिः।

लोचनकारोऽप्यत्र ग्रन्थकृदाशयं विवृण्वन् भणति-विभावाद्यौचित्येन हि विना का रसवत्ता कवेरिति। तस्माद्विभावाद्यौचित्यमेव रसवत्ताप्रयोजकं नान्यदिति भावः।

अन्यत्राऽप्यसौ स्वमतं प्रकटयति-तथा हि अचेतनं शवशरीरं कुण्डलाद्युपेतमपि न भाति, अलङ्कार्यस्याभावात्। यतिशरीरं कटकादियुक्तं हास्यावहं भवति, अलङ्कार्यस्यानौचित्यात्। इति।

अन्यत्र भूयोऽप्याह-औचित्यनिबन्धनं रसभावादि मुक्त्वा नाऽन्यत् किञ्चिदस्ति इति तदेवान्तर्भाति मुख्यं जीवितमित्यभ्युपगन्तव्यम्। इति।

ध्वन्यालोक के सम्पूर्ण तीसरे उद्योत में ध्वनिकार ने विविध दृष्टियों से औचित्य का प्रतिपादन किया है। उस प्रकरण का सारांश यहाँ प्रस्तुत किया जा रहा है-

इतिहास में भले ही नाना प्रकार की रसाञ्चित कथायें विद्यमान हों तथापि (उनमें से) विभावादि के औचित्य से युक्त अंश का ही आहरण करना चाहिये।।३१।।

कवि की अपनी कोई वैयक्तिक इच्छा भी यदि रसविरोधिनी हो तो कथामार्ग के व्यतिक्रम को दृष्टि में रखते हुए, उसे इतिहासार्थ के साथ संवलित नहीं करना चाहिये।।३२।।

यहाँ मैने ध्वनिकार आनन्दवर्धन के ही वचनों को अनूदित किया है (अपने शब्दों में लिखा है) इस सन्दर्भ में आनन्दवर्धन स्वयं कहते हैं कि प्रबन्ध का उपनिबन्धन करने वाले कवि के द्वारा, हर प्रकार से, रस के अधीन ही होना चाहिये। यदि प्रबन्ध-रचना में कवि रस के प्रतिकूलस्थिति देखें, तो उसको अपवर्जित करके भी, पूर्ण स्वतंत्रता के साथ रसानुकूल किसी अन्यविध कथान्तर को कल्पित कर लें। केवल इतिवृत्त मात्र का निर्वाह ही कवि का कोई प्रयोजन नहीं है। उसकी सिद्धि तो इतिहास से ही हो जाती है। ध्वन्या० ३।१४ की वृत्ति।

इस सन्दर्भ में लोचनकार भी ग्रंथकार के अभिप्राय की व्याख्या करते हुए कहते हैं कि विभावादि के औचित्य के विना भला कवि की रसवत्ता कहाँ? इसलिये विभावादि का औचित्य ही रसवत्ता का प्रयोजक है, कोई और नहीं।

एक अन्य स्थान पर भी आचार्य अभिनव अपना मत प्रकाशित करते हैं-जैसे कि चैतन्य-विहीन शव (मुर्दे) का शरीर कुण्डलादि से अलंकृत होते हुए भी शोभित नहीं होता है, अलंकार्य के अभाववश। यति (संन्यासी) का शरीर केयूरादि से अलंकृत होने पर भी हास्यावह होता है, अलंकार्य के अनौचित्य के कारण!

अन्यत्र, वह एक बार पुनः कहते हैं-औचित्य का निबन्धन रस तथा भाव आदि के अतिरिक्त और कुछ भी नहीं है। अतः वह (औचित्य) उसी (रस) में अन्तर्लीन होता है मुख्य जीवित बन कर-ऐसा समझना चाहिये।

आनन्दवर्धनाऽभिनवगुप्ताभ्यामेतावता विस्तरेण सारवच्छब्दसमुदायेन च व्याख्याते सत्यप्यौचित्यतत्त्वे क्षेमेन्द्रस्तस्य काव्यात्मतां साधयितुमुपक्रमत इत्यहो साहसमाचार्यवर्यस्य! एवं प्रतीयते यदसौ स्वसाहित्यगुरोरभिनवगुप्तपादाचार्यस्याचार्यानन्दवर्धनेऽतितरां श्रद्दधानस्यापि मन्तव्यं न सुष्ठु वेद यो हि सुस्पष्टमूचे-औचित्यनिबन्धनं रसभावादि मुक्त्वा नान्यत् किञ्चिदस्तीति।

महता शब्दाडम्बरेणासौ स्वमतं पुरस्कुरुते-

उचितं प्राहुराचार्याः सदृशं किल यस्य यत्।
उचितस्य च यो भावस्तदौचित्यं प्रचक्षते।।

अलङ्कारास्त्वलङ्कारा गुणा एव गुणाः सदा।
औचित्यं रससिद्धस्य स्थिरं काव्यस्य जीवितम्।।

वस्तुत औचित्यं नाम काव्ये रसास्तित्वप्रतिभूः। यत्र यत्रौचित्यं तत्र तत्र रसः, यत्र पुनर्नौचित्यं तत्र न रस इत्यन्वयव्यतिरेकाभ्यामुभयोरविनाभावः सिध्यति। औचित्यं न तावत्स्वतन्त्रतत्त्वं किमपि रसालङ्कारादिवत्। अतएव न कथमपि समुत्तिष्ठति तस्य काव्यात्मतायाः प्रश्नः। तदयमत्र निखिलसन्दर्भसंक्षेपः।

नालङ्कारो न वा रीतिर्वक्रोक्तिरथवौचिती।
नूनं शब्दार्थधर्मत्वात्काव्यात्मत्वं समञ्चति।।३३।।

रूढमेषां स्वरूपं हि व्याख्यातं पूर्वसूरिभिः।
सुज्ञातञ्च सचेतोभिर्नान्यथाऽऽख्यातुमिष्यते।।३४।।

अन्यथाऽपि समाख्यातं हृदयेषु सचेतसाम्।
श्रद्धामपि परां स्त्रष्टुं शक्नुते न कथञ्चन।।३५।।

रीत्यलङ्कारयोः काव्यात्मत्वं ध्वनिकृता स्वयम्।
यद्यपि खण्डितं स्वैरं महामहिमशालिना।।३६।।

आनन्दवर्धन तथा अभिनवगुप्त द्वारा इतने विस्तार तथा सारगर्भित शब्दावली द्वारा औचित्य तत्त्व के व्याख्यात किये जाने के बावजूद भी क्षेमेन्द्र उसकी काव्यात्मता सिद्ध करने का प्रयास कर रहे हैं, हन्त! यह आचार्यप्रवर का साहस ही है! ऐसा प्रतीत होता है कि आचार्य आनन्दवर्धन के प्रति अत्यन्त श्रद्धा रखने वाले अपने साहित्यगुरु अभिनवगुप्तपादाचार्य के मन्तव्य को भी वह भलीभाँति नहीं समझ पाये जिन्होंने कि स्पष्ट शब्दों में कहा था-रस तथा भावादि को छोड़ औचित्य-निबन्धन और कोई वस्तु नहीं है।

शब्दों के विशाल आडम्बर के साथ क्षेमेन्द्र अपना मत प्रस्तुत करते हैं-

जो वस्तु जिस (दूसरी) वस्तु के समान है, उसे आचार्यों ने (उसके) उचित कहा है। और उचित का जो भाव है उसी को औचित्य कहा जाता है।

अलंकार तो अलंकार ही हैं। गुण भी सदा गुण ही होते हैं (अतः ये काव्य की आत्मा नहीं) रससिद्ध काव्य की शाश्वत आत्मा तो (बस) औचित्य ही है।

वस्तुतः औचित्य, काव्य में रस के अस्तित्व का साक्षी है। जहाँ-जहाँ औचित्य होता है वहाँ-वहाँ रस होता है, और जहाँ-जहाँ औचित्य नहीं होता है वहाँ-वहाँ रस (भी) नहीं होता है। इस प्रकार अन्वय-व्यतिरेक की व्याप्तिवश दोनों में अविनाभाव सिद्ध होता है। (इस प्रकार) औचित्य रस एवं अलंकारादि के समान कोई स्वतंत्र तत्त्व नहीं है। इसलिये उसकी काव्यात्मता का तो प्रश्न ही नहीं उठता। तो फिर यह रहा समूचे सन्दर्भ का संक्षेप-

न अलंकार, न ही रीति, वक्रोक्ति अथवा औचित्य काव्य की आत्मा सिद्ध होते हैं (क्यों?) निश्चित रूप से (स्थूल) शब्द एवं अर्थ के धर्म होने के कारण।।३३।।

क्योंकि इन सभी का स्वरूप पूर्वाचार्यों द्वारा (बहुशः) व्याख्यात (अतएव) रूढ है। सहृदयों ने उन्हें भलीभाँति समझ भी रखा है अतः उनकी व्याख्या शास्त्रेतर रीति से नहीं की जा सकती ।।३४।।

थोड़ी देर के लिये यदि (काव्यात्मता के पक्ष में) उनकी किसी दूसरे प्रकार की व्याख्या कर भी दी जाय तो सहृदयों के हृदयों में वह (व्याख्या) उत्कृष्टकोटिक श्रद्धा का कथमपि संचार नहीं कर सकेगी।।३५।।

रीति तथा अलंकार की काव्यात्मता का खण्डन तो महामहिमशाली ध्वनिकार ने यद्यपि स्वयमेव यथेष्ट रीति से कर दिया है।।३६।।

किन्तु तत्र न विद्वेषो नेर्ष्या नापि दुराग्रहः।
न च सारस्वती स्पर्धा न वा पण्डितमानिता।।३७।।

सादरं सार्जवञ्चैव सम्प्रस्तूय यथायथम्।
पूर्वपक्षमसौ सूरिरनिगूह्य सविस्तरम्।।३८।।

पुरस्करोति सिद्धान्तपक्षं विनयवर्त्मना।
काऽत्र देयोपपत्तिर्भोः प्रमाणं कोविदाःस्वयम्।।३९।।

न कुतर्कं न वा युक्तिं पूर्वसूर्यसमर्थिताम्।
नाऽप्ययशास्त्रां स्वमन्तव्यसाधिकां कामपि प्रमाम्।।४०।।

आनन्दवर्धनाचार्यः स्वीयसिद्धान्तपुष्टये।
उपन्यस्यति धौरेयो विदुषां निर्वृतात्मनाम्।।४१।।

ध्वनेः काव्यात्मता तस्मात्स्वीकृता परवर्तिभिः।
काव्यशास्त्ररहस्यज्ञैः प्रख्योपाख्याविचक्षणैः।।४२।।

अभाववादिनां तर्काः प्रतितर्कैः समाहिताः।
यथा हि ध्वनिकारेण पिहितञ्च तदाननम्।।४३।।

नैयून्यञ्च यथा भक्तेः सम्प्रदर्श्य यथोचितम्।
ध्वनेर्महाविषयत्वं साधितं तेन सूरिणा।४४।।

प्रकाशमेव तत्सर्वं न किलाऽकाशभाषितम्।
स्वगतं नियतश्राव्यं नापि हन्ताऽपवारितम्।।४५।।

परन्तु उस खण्डन में उनका (किसी के प्रति) न तो विद्वेषभाव है, न ईर्ष्या है, न दुराग्रह (हठधर्मिता) है, न सारस्वती प्रतिस्पर्धा है और न ही मात्र स्वयं को महापण्डित मानने का भाव।।३७।।

प्रभूत आदर एवं सौजन्य के साथ ही साथ विद्वच्छिरोमणि आनन्दवर्धन, विना किसी लगाव-छिपाव के, पूर्वपक्षियों के मतों को यथार्थरूप में सविस्तर प्रस्तुत करते हैं।।३८।।

तथा (अत्यन्त) विनम्रतापूर्वक सिद्धान्तपक्ष को उपन्यस्त करते हैं। अब, इस सन्दर्भ में हाथ कंगन को आरसी क्या? विद्वज्जन स्वयं प्रमाण हैं।।३९।।

शास्त्रप्रतिभा से आनन्दित चित्तवृत्ति वाले विद्वानों के अग्रगण्य आचार्य आनन्दवर्धन अपने सिद्धान्त (ध्वनिकाव्यात्मवाद) की पुष्टि के लिये न तो कोई कुतर्क प्रस्तुत करते हैं, न पूर्वाचार्यों द्वारा अ-समर्थित कोई युक्ति देते हैं और नही अपने मन्तव्य (मात्र) को सिद्ध करने वाली (परन्तु मूलतः) अशास्त्रीय कोई प्रमा!!४०, ४१।।

इसीलिये काव्यशास्त्र के मर्मज्ञ, प्रख्या-उपाख्याविचक्षण परवर्ती आचार्यों ने (आनन्दवर्धन द्वारा समुपदिष्ट) ध्वनि की काव्यात्मता को अंगीकार किया।।४२।।

ध्वनिकार ने जिस प्रकार अभाववादी आचार्यों के तर्कों का अपने प्रतितर्कों से समाधान किया तथा उनका मुँह बन्द कर दिया।।४३।।

अथवा जैसे भाक्तवाद (लक्षणा में ध्वनि के अन्तर्भाव) की कमियों को यथोचित मात्रा में सम्यक्तया प्रदर्शित कर आचार्यप्रवर ने ध्वनि की (लक्षणापेक्षया) महाविषयता सिद्ध की।।४४।।

वह सब कुछ सर्वजन-समक्ष विद्यमान है। न वह अकाशभाषित है, न स्वगत (मन में गोपित) न ही नियतश्राव्य (जनान्तिक) और न ही अपवारित।।४५।।

स्पष्टम्। यथाऽह ध्वनिकार एव-अनेन वाच्यवाचकचारुत्वहेतुभ्य उपमादिभ्योऽनुप्रासादिभ्यश्च विभक्त एव ध्वनेर्विषय इति दर्शितम्। यदप्युक्तम्-प्रसिद्धप्रस्थानातिक्रमिणो मार्गस्य काव्यत्वहानेर्ध्वनिर्नास्ति इति तदप्ययुक्तम्। यतो लक्षणकृतामेव स केवलं न प्रसिद्धः लक्ष्ये तु परीक्ष्यमाणे स एव सहृदयहृदयाह्लादकारि काव्यतत्त्वम्। ततोऽन्यच्चित्रमेवेत्यग्रे दर्शयिष्यामि। यदप्युक्तम्-कामनीयकमनतिवर्तमानस्य तस्योक्तालंकारादिप्रकारेष्वन्तर्भाव इति तदप्यसमीचीनम्। यतो वाच्यवाचकमात्राश्रयिणि प्रस्थाने व्यङ्ग्य-व्यञ्जक-समाश्रयेण व्यवस्थितस्य ध्वनेः कथमन्तर्भावः? वाच्यवाचक-चारुत्वहेतवो हि तस्याङ्गभूता, न तु तदेकरूपा एवेति प्रतिपिपादयिष्य-माणत्वात्।

भक्तिविषयेऽपि कथयति ध्वनिकारः-

भक्त्या बिभर्त्ति नैकत्वं रूपभेदादयं ध्वनिः।
अतिव्याप्तेरथाव्याप्तेर्न चासौ लक्ष्यते तया।।

वाचकत्वाश्रयेणैव गुणवृत्तिर्व्यवस्थिता।
व्यञ्जकत्वैकमूलस्य ध्वनेः स्याल्लक्षणं कथम्।।

तस्मादन्यो ध्वनिरन्या च गुणवृत्तिः। अव्याप्तिरस्य लक्षणस्य। नहि ध्वनिप्रभेदो विवक्षितान्यपरवाच्यलक्षणः अन्ये च बहवः प्रकारा भक्त्या व्याप्यन्ते। तस्माद् भक्तिरलक्षणम् इति।

बात स्पष्ट है। जैसा कि ध्वनिकार ने ही कहा है-मेरे इस व्याख्यान से, वाच्य (अर्थ) एवं वाचक (शब्द) के चारुत्व का हेतु बनने वाले उपमादि से तथा अनुप्रासादि (अलंकार) से ध्वनि का क्षेत्र सर्वथा पृथक् ही है-ऐसा प्रदर्शित किया गया। जो यह कहा गया (कुछेक लोगों द्वारा) कि पहले से चले आ रहे प्रस्थानों का अतिक्रम करने वाले मार्ग को स्वीकारने से काव्यत्व की हानि होगी, इसलिये (प्रस्थान-विरोधी) ध्वनि स्वीकरणीय नहीं है, तो यह भी अनुचित है। क्योंकि मात्र लक्षणकार आचार्यों में वह ध्वनि प्रसिद्ध (भले) नहीं है परन्तु लक्ष्यग्रंथों (रामायण, महाभारतादि) की परीक्षा करने पर तो वह ध्वनि ही सहृदयों के हृदयों को आह्लादित करने वाला काव्यतत्त्व सिद्ध होती है। उससे विरहित तो बस चित्रकाव्य ही बचता है, ऐसा आगे प्रदर्शित करूँगा।

और जो यह कहा कि यदि ध्वनि कामनीयक का अतिक्रमण नहीं करने वाला कोई तत्त्व है तो फिर उसका अन्तर्भाव (तथाविध) अलंकारादि में ही हो जायेगा,

यह भी उचित नहीं हैं। क्योंकि वाच्य और वाचक मात्र के समाश्रयी प्रस्थान में व्यङ्ग्य-व्यञ्जक के समाश्रय से व्यवस्थित ध्वनितत्त्व का भला अन्तर्भाव कैसे हो सकता है? वाच्य और वाचक के चारुत्व के हेतु तो उस ध्वनि के अंगभूत हुए, नकि उसके साथ एक रूप ही-ऐसा अभी आगे निरूपित किया जायेगा।

भक्ति के विषय में भी ध्वनिकार कहते हैं-

रूप का भेद होने के कारण यह ध्वनि भक्ति (लक्षणा) से एकरूप सिद्ध नहीं होती है। अतिव्याप्ति अथवा अव्याप्ति दोष के कारण वह लक्षणा द्वारा लक्षित नहीं हो पाती।

जो गुणवृत्ति (भक्ति या लक्षणा) वाचकत्व-मात्र के आश्रय से (शाब्दी लक्षणा में) व्यवस्थित होती है वह भला व्यञ्जकत्वमूलक ध्वनि का लक्षण कैसे हो सकती है?

इसलिये पृथक् है ध्वनि और (उससे भी) पृथक् है गुणवृत्ति (यदि गुणवृत्ति को ही ध्वनि मान लिया जाय तो) यह लक्षण अव्याप्ति दोष से दूषित होगा। ध्वनि का ही एक विशिष्ट भेद 'विवक्षितान्यपरवाच्य' तथा और भी अनेक ध्वनि के भेद भक्ति से व्याप्त नहीं होते। इसलिये भक्ति ध्वनि का लक्षण नहीं बन सकती।

## ॥अथ ध्वनेःकाव्यात्मत्वप्रकरणम्॥

एवं काव्यात्मसिद्धान्तान् सर्वानपि यथामति।
सादरञ्च समालोच्य प्रकृतं प्रतिपाद्यते॥४६॥

स चास्ति ध्वनिसिद्धान्तो वय्याकरणसम्मितः।
आनन्दवर्धनाचार्यैर्भूयश्चापि प्रतिष्ठितः॥४७॥

कामं कालक्रमेणाऽयं तुरीयस्थानमर्हति।
रसालङ्काररीतीनामानन्तर्यमुपागतः॥४८॥

तथापि ध्वनिसिद्धान्तः सर्वतत्त्वसमन्वितः।
सर्वमान्यः स्थिरश्चेति कृत्वा पश्चात्समीक्ष्यते॥४९॥

ध्वनेः काव्यात्मतासिद्धौ न कस्याप्यवमानना।
यतः पूर्वे परे सर्वे सिद्धान्ता अत्र सङ्गताः॥५०॥

यो हि प्रतीयमानार्थः काव्यात्मत्वेन घोषितः।
आनन्देन ध्वनिनामा व्यङ्ग्यार्थाऽपरसंज्ञितः॥५१॥

**अलङ्काररसौ तस्माद् ध्वनेर्भिन्नौ न तिष्ठतः।**
**औचित्यञ्च रसाद्भिन्नं नैव सिध्यति किञ्चन।।५२।।**

**कौन्तिकी चापि वक्रोक्तिश्चेद् विचित्रैव साऽभिधा।**
**व्यङ्ग्यार्थात्साऽपि नो भिन्ना प्रमाणमत्र सूरयः।।५३।।**

**वाच्यार्थात्सर्वथा भिन्ना भङ्गीभणितिमेदुरा।**
**षड्विधा यदि वक्रोक्तिः कुन्तकस्य विलक्षणा।।५४।।**

**ध्वनिस्सैव न तद्भिन्ना वक्रोक्तेश्चाप्यसौ परः।**
**तत्स्वरूपमथ स्फीतं यथाशास्त्रं निरूप्यते।।५५।।**

इस प्रकार, समस्त (ध्वनीतर) काव्यात्म सिद्धान्तों को यथामति तथा आदरपूर्वक समालोचित करने के बाद (अब) मूल विषय पर आता हूँ।।४६।।

वह है वय्याकरणों द्वारासमर्थित ध्वनि (के काव्यात्मा होने का) सिद्धान्त जिसे (चिरकालानन्तर) आनन्दवर्धनाचार्य ने पुनः प्रतिष्ठित किया।।४७।।

भले ही कालक्रमानुसार यह सिद्धान्त रस, अलंकार तथा रीति के (काव्यात्मवाद के) अनन्तर चौथे स्थान पर आता है।।४८।।

तथापि उस ध्वनिसिद्धान्त की समीक्षा सबसे अन्त में इस उद्देश्य से की जा रही है कि वह सर्वतत्त्व-समन्वित, सर्वमान्य तथा स्थिर है।।४९।।

ध्वनि को काव्यात्मा अंगीकार करने में किसी की भी अवमानना नहीं है क्योंकि पूर्ववर्ती तथा परवर्ती सभी (काव्य) सिद्धान्त इसमें समञ्जस हैं।।५०।।

आनन्दवर्धन द्वारा जो **प्रतीयमानार्थ** काव्यात्मा के रूप में घोषित किया गया है, जिसकी दूसरी संज्ञा व्यङ्ग्यार्थ है और जिसे ध्वनि (भी) कहते हैं।।५१।।

रस और अलंकार उस ध्वनि से पृथक् नहीं रहते। दूसरी ओर औचित्य भी रस से भिन्न कोई इतर तत्त्व नहीं सिद्ध होता ।।५२।।

और यदि कुन्तकाभिमत वह वक्रोक्ति भी विलक्षणतायुक्त अभिधामात्र ही है तो वह भी व्यङ्ग्यार्थ से भिन्न नहीं ही है। इस सन्दर्भ में प्रमाण हैं विद्वज्जन।।५३।।

भंगी-भणिति से ओत-प्रोत तथा वाच्यार्थ से सर्वथा भिन्न आचार्य कुन्तक की षड्विधा वक्रोक्ति भी यदि (कोई) विलक्षण ही तत्त्व है।।५४।।

तो फिर वह ध्वनि ही है, उससे भिन्न (और कुछ भी) नहीं। वह ध्वनि (तो) वक्रोक्ति से भी अधिक श्रेष्ठ है। अब उसी का साफ-सुथरा स्वरूप शास्त्रानुसार निरूपित किया जा रहा है।।५५।।

यथाशास्त्रं निरूप्यते। नाऽत्र कश्चिन्ममाग्रहः। यथाऽऽनन्दवर्धनपूर्ववर्तिभिर्भामहदण्डिवामनोद्भटादिभिः परवर्तिभिश्चाप्यभिनवमम्मटरुय्यकविश्वनाथ-पण्डितराजादिभिर्निरूपितं तथैव निरूप्यते। किञ्च, यथाऽस्मदुपाध्यायैः साहित्यव्याकरणाम्भोधिभूतैश्श्रीमच्चण्डिकाप्रसादशुक्लपादैरध्यापितं तथा निरूप्यते।

अतीव प्राक्तनी ध्वनिपरम्परा। यथाऽह स्वयमेव ध्वनिकारः-यद्यपि च ध्वनिशब्दसंकीर्तनेन काव्यलक्षणविधायिभिर्गुणवृत्तिरन्यो वा न कश्चित्प्रकारः प्रकाशितस्तथापि गुणवृत्त्या काव्येषु व्यवहारं दर्शयता ध्वनिमार्गो मनाक्स्पृष्टोऽपि न लक्षित इति परिकल्प्यैवमुक्तम्-भाक्तमाहुस्तमन्ये।-ध्वन्या० १।१ वृत्तिः।

यथा वा सुस्पष्टमुक्तं रसगङ्गाधरकारेण-ध्वनिकारात्प्राचीनैर्भामहोद्भटप्रभृतिभिः स्वग्रन्थेषु कुत्रापि ध्वनिगुणीभूतव्यङ्ग्यादिशब्दा न प्रयुक्ता इत्येतावतैव तैर्ध्वन्यादयो न स्वीक्रियन्ते इत्याधुनिकानां वाचोयुक्तिरयुक्तैव। यतः समासोक्तिव्याजस्तुत्यप्रस्तुतप्रशंसाद्यलङ्कारनिरूपणेन कियन्तोऽपि गुणीभूत-व्यङ्ग्यभेदास्तैरपि निरूपिताः। अपरतश्च, सर्वोऽपि ध्वनिप्रपञ्चः पर्यायोक्तकुक्षौ निक्षिप्तः। न ह्यनुभवसिद्धोऽर्थो बालेनाप्यपनिह्नोतुं शक्यते। ध्वन्यादिशब्दैः परं व्यवहारो न कृतः। न ह्येतावताऽनङ्गीकारो भवति इति।

शास्त्र (ध्वन्यालोक) के अनुसार ही निरूपित किया जा रहा है। इस निरूपण में मेरा कोई (अपना) आग्रह नहीं है। जैसे आनन्दवर्धन के पूर्ववर्तियों-भामह, दण्डी, वामन तथा उद्भटादि द्वारा तथा परवर्तियों-अभिनवगुप्त, मम्मट, रुय्यक, विश्वनाथ, पण्डितराज जगन्नाथ आदि द्वारा भी निरूपित किया गया है, ठीक उसी प्रकार निरूपित किया जा रहा है।

पुनश्च, जैसा साहित्य एवं व्याकरणज्ञान के सागरभूत मेरे साहित्यशास्त्रोपाध्याय पूज्यचरण चण्डिकाप्रसाद शुक्ल जी द्वारा अध्यापित किया गया, उस प्रकार निरूपित किया जा रहा है।

ध्वनि की परम्परा अत्यन्त प्राचीन है। जैसा कि स्वयं ध्वनिकार ने कहा-यद्यपि काव्यलक्षणकार आचार्यों ने गुणवृत्ति (लक्षणा) अथवा अन्य किसी काव्यभेद को ध्वनि शब्द के माध्यम से प्रकाशित नहीं किया है तथापि लक्षणा शक्ति द्वारा काव्यों में उसका प्रयोग प्रदर्शित करते हुए उन लोगों द्वारा ध्वनि का मार्ग अंशतः व्यवहृत करते हुए भी (साक्षात् ध्वनि के रूप में) नाम्ना लक्षित नहीं किया गया-

ऐसी परिकल्पना करके ही हमने यह कहा है कि अन्यान्य आचार्यों ने उस ध्वनि को भाक्त अर्थ (लक्ष्यार्थ) बताया है। ध्वन्या० १।१ की वृत्ति।

अथवा, जैसा कि **रसगंगाधरकार** ने सुस्पष्ट कह दिया है-ध्वनिकार (अनन्दवर्धन) से प्राचीन आचार्य भामह एवं उद्भट आदि द्वारा अपने ग्रंथों में कहीं भी (यद्यपि) ध्वनि, गुणीभूतव्यङ्ग्यादि शब्द नहीं प्रयुक्त किये गये हैं, बस इतने से ही-**इन आचार्यों द्वारा ध्वनि आदि ( काव्यतत्त्व ) स्वीकार नहीं किये गये हैं**-आधुनिकों द्वारा यह वाचोयुक्ति (तर्क) प्रस्तुत करना अनुचित ही है। क्योंकि समासोक्ति, व्याजस्तुति, अप्रस्तुतप्रशंसा आदि अलंकारों के निरूपण में (तो) कितने ही गुणीभूतव्यङ्ग्य (काव्य) के भेद उनके द्वारा भी निरूपित किये गये हैं। दूसरी ओर, सारा का सारा ध्वनिप्रपञ्च **पर्यायोक्त** (अलंकार) की कुक्षि में निक्षिप्त कर दिया गया है। अनुभव-सिद्ध अर्थ तो बच्चे द्वारा भी छिपाया नहीं जा सकता। यह अवश्य है कि ध्वनि शब्द द्वारा (उन आचार्यों ने) व्यवहार नहीं किया है (परन्तु) इतने से ही (उन आचार्यों द्वारा) **ध्वनि का अनंगीकार** (निषेध) नहीं माना जा सकता।

**अथ काव्यात्ममीमांसाक्रमे प्रश्नोऽयमादिमः।**
**शब्दार्थमयकाव्यस्य यदात्मा को नु सम्भवेत्।।५६।।**

**आत्मापि स्यात्सजातीय इति वादो विपश्चिताम्।**
**जलात्मा जलजातीयो दृषदात्मा दृषन्मयः।।५७।।**

**धराजातीय एवात्मा धराया इति निश्चितम्।**
**नाग्नेरम्भोमयश्चात्मा भवितुं शक्नुयादिह।।५८।।**

**काव्यात्माऽपि तथैवाऽयं काव्यजातीय एव हि।**
**यदि कश्चिद्भवेन्नूनं तदा न्यायोचितं भवेत्।।५९।।**

**शब्दार्थसाहितीकाव्यं यद्यपीह सुनिश्चितम्।**
**परमार्थस्तथाऽप्यत्र प्रेक्षावद्भिर्निरूप्यताम्।।६०।।**

**काव्यप्रयुक्तशब्दानां केवलं पठनेन चेत्।**
**जायेत चित्तविश्रान्तिश्शब्दानां तर्हि काव्यता।।६१।।**

**किन्तु नैवं भवत्येव शब्दैश्चित्तं न रज्यते।**
**केवलं जायते तैस्तु श्रुतिरन्ध्रानुरञ्जनम्।।६२।।**

**काव्यप्रयुक्तशब्दानामप्यर्थावगमादृते।**
**क्व नु सा चित्तविश्रान्तिः काव्यानन्दोऽप्यसौ कुतः।।६३।।**

तस्मात्काव्यार्थ एवासौ जायते परमार्थतः।
काव्यं तद्विग्रहो वापि प्रमाणं रसिकाः स्वयम्।।६४।।

अब, काव्य की आत्मा का विचार-विमर्श करने के क्रम में पहला प्रश्न यह उठता है कि शब्द और अर्थ को समष्टिभूत काव्य की आत्मा कौन हो सकता है??५६??

आत्मतत्त्व भी (शरीर) सजातीय ही होना चाहिये, ऐसा विपश्चितों का मन्तव्य है। जल की आत्मा (भी) जलजातीय होनी चाहिये। पाषाण की आत्मा (भी) पाषाणकोटिक (ही) होनी चाहिये।।५७।।

पृथ्वी की आत्मा पृथ्वीजातीय ही होनी चाहिये, यह सुनिश्चित है। इस संसार में अग्नि की जलमय आत्मा होनी संभव नहीं है।।५८।।

ठीक उसी प्रकार यह काव्य की आत्मा भी काव्यजातीय ही कोई वस्तु हो तो निश्चित रूप से यही न्यायोचित होगा।।५९।।

यद्यपि साहित्यशास्त्र में यह निर्णीत तथ्य है कि शब्द एवं अर्थ की समष्टि ही काव्य है, फिर भी इसका परमार्थ विद्वज्जनों द्वारा निरूपित किया जाना चाहिये।।६०।।

यदि अकेले काव्य में प्रयुक्त किये गये शब्दों के पढ़ने से चित्त की विश्रान्ति (उत्कण्ठोपशम) हो जाय तो (केवल) शब्दों की काव्यता मान ली जाय।।६१।।

परन्तु ऐसा नहीं ही होता है। मात्र शब्दों (के पाठ) से चित्त अनुरंजित नहीं होता। शब्दों के पारायण मात्र से तो केवल श्रुतिकुहरों (कर्णरन्ध्रों) का अनुरंजन हो पाता है।।६२।।

काव्य में प्रयुक्त किये गये शब्दों का अर्थबोध हुए विना वह चित्त की विश्रान्ति भला कहाँ? और वह काव्यानन्द भी कहाँ? ६३।।

इसलिये काव्यप्रयुक्त शब्दों का वह अर्थ (अर्थात् काव्यार्थ) ही परमार्थतः काव्य होता है अथवा काव्य का विग्रह (स्वरूप) होता है। सहृदयजन स्वयं इस सचाई के प्रमाण हैं।।६४।।

**ननु शब्दार्थौ सहितावेव काव्यम्। नाऽत्र काऽपि संशीतिः। न केवलं शब्दो न चाप्यर्थः काव्यमितरेतरवियोगाऽसहिष्णुत्वात्। तथापि व्यवहारदृष्ट्या शब्दप्रकटितार्थ एव काव्यम्। काव्यप्रयुक्तशब्दानामभिप्रायेऽवगत एव जायते काव्यानन्दः। अतएवाऽर्थसम्पदेव काव्यमित्यभिराजः। तद्यथा-**

ददददोऽदुदैदाददेऽदद-
द्युददुदिद्ददाददददोद्ददौ।
दुरुदरोदरे रैददाऽदरा-
द्दुददरिद्रदुद्दारदेऽद्ददौ।।

पण्डितगोपीकृष्णव्यासप्रणीतजयमल्लकाव्यादुद्धतोऽयं श्लोकः कामं श्रुतिशष्कुलीसौख्यं जनयेद् दकारावृत्तिवशात्। परन्तु यावदेषां शब्दानामर्थो नाऽवगम्यते क्व तावत्काव्यानन्दः?

यथा वाऽस्मद्दीक्षागुरूणां भार्गवराधवीयकारणां चित्रकूटस्थतुलसी-पीठाधीश्वराणां श्रीरामभद्राचार्यपादानां श्लोकद्वय मिदम्।

कः कौ के केककेकाकः काककाकां-ककः ककः।
काकः काकः ककः काकः कुकाकः कककः कुकः।।

लोलालाली लला-लोल-लीला लालालला लल।
लेले लेलललालील लाल-लौलील लालल।।

-सर्गः २० श्लोकौ ९२, ९४

उभयत्राप्यर्थावगमाद्दते श्रवणजन्यश्रुतिशष्कुलीसौख्यमात्रम्!

यच्चाचार्यकुन्तकेनोक्तम्-शब्दार्थौ काव्यं वाचको वाच्यश्चेति द्वौ सम्मिलितौ काव्यम्। द्वावेकमिति विचित्रैवोक्तिः। तेन यत्केषाञ्चिन्मतं कविकौशलकल्पितकमनीयताऽतिशयः शब्द एव केवलं काव्यमिति, केषाञ्चिद्वाच्यमेव रचनावैचित्र्यचमत्कारकारि काव्यमिति, पक्षद्वयमपि निरस्तं भवति। तस्माद् द्वयोरपि प्रतितिलमिव तैलं तद्विदाह्लादकारित्वं वर्तते न पुनरेकस्मिन्निति तत्र कस्य वा विप्रतिपत्तिः? तथाऽप्यर्थ एव विशेषेण काव्यमिति ममाग्रहः।

पदार्थोऽथ च वाक्यार्थः काव्यार्थश्च तृतीयकः।
नूनमेते त्रयोऽप्यर्था विदुषां प्राणवल्लभाः।।५७।।

निश्चित रूप से परस्पर सम्पृक्त शब्द एवं अर्थ ही काव्य हैं। इसमें कोई संशय नहीं है। न ही अकेला शब्द और नही अकेला अर्थ काव्य होता है-एक दूसरे का वियोग (अभाव) न सह पाने के कारण। फिर भी, व्यवहार की दृष्टि से-शब्दों द्वारा प्रकट किया गया अर्थ ही काव्य होता है। काव्य में प्रयुक्त शब्दों का अभिप्राय समझ में आने के बाद ही काव्यानुशीलन का आनन्द प्राप्त होता है।

**अतएव अर्थसम्पत् ही काव्य है, यह अभिराज का मत है ।**

उदाहरणार्थ–जो व्यक्ति दान देता हुआ धनोपभोग करता है वह उदय को प्राप्त करता है। परन्तु जो अददत् अर्थात् न देते हुए मात्र संग्रह करता जाता है वह दोषी बनता है। जो औरों से कुछ लेता नहा, मात्र अपना देता ही है वह स्वर्गसुख प्राप्त करता है। जो 'दुरुदरे' अर्थात् द्यूतक्रीडा में रैदत् अर्थात् धन का अपव्यय करता है वह पापविद्ध होता है तथा अपने धन को व्यर्थ ही गँवाता है। ऐसा अज्ञान–ग्रस्त प्राणी आत्मस्वरूप से पृथक् होकर नाना जीवयोनियों में प्रक्षिप्त होता रहता है।

पण्डित गोपीकृष्ण व्यास (जन्म ८ अगस्त १९२० ई०, पोखरण, जैसलमेर, राजस्थान) प्रणीत जयमल्लकाव्यकीर्तिलता से उद्धृत यह श्लोक भले ही (पढ़ते समय) कर्णकुहरों में श्रुतिसौख्य पैदा करे दकार की (आद्यन्त) आवृत्तिवशात्। परन्तु जब तक इन शब्दों का अर्थ नहीं समझ में आता तब तक (पारमार्थिक) काव्यानन्द कहाँ?

अथवा, जैसे मेरे दीक्षागुरु **भार्गवराघवीय** महाकाव्य–प्रणेता, चित्रकूट–स्थित तुलसीपीठ के अधिपति श्रद्धेय श्री राम भद्राचार्य जी महाराज का श्लोकद्वय ! दोनों ही श्लोकों में, बिना अर्थबोध हुए, मात्र श्रवणजन्य कर्णकुहरों का सुख प्राप्त होता है।

जो आचार्य कुन्तक ने कहा–शब्द और अर्थ मिलकर काव्य हैं। वाचक और वाच्य दोनों सम्मिलित रूप से काव्य हैं (अकेले–अकेले नहीं) दोनों (शब्द और अर्थ) एक (काव्य) हैं यह कहना भी विचित्र ही है। तो ऐसा कहने से यदि कुछेक लोगों का यह मन्तव्य हो कि कवि–कौशल से कल्पित कमनीयता के अतिशय वाला **शब्द ही** केवल (अकेला) काव्य होता है अथवा कुछेक का यह मन्तव्य कि रचनावैचित्र्य से चमत्कार की सृष्टि करने वाला **अर्थमात्र** ही काव्य होता है–तो ये दोनों ही पक्ष निरस्त हो जाते हैं। इसलिये तिल–तिल में विद्यमान तैल के समान, शब्द और अर्थ –दोनों में ही तद्विदाह्लादकारित्व (पाठक को आनंदित करने की क्षमता) विद्यमान होता है, न कि किसी एक में ही।

कुन्तक के इस मन्तव्य में भला किसे सन्देह होगा? (ऐसा ही है) फिर भी, विशेष रूप से (व्यवहारदृष्ट्या) **अर्थ ही काव्य** है यह मेरा (व्यक्तिगत) आग्रह है।

पदार्थ, वाक्यार्थ एवं तीसरा काव्यार्थ ! निश्चय ही ये तीनों अर्थ विद्वजनों को प्राणातिप्रिय होते हैं।।५७।।

पदार्थजीविनश्शब्दशास्त्रज्ञा भुवि सम्मताः।
मीमांसकाश्च विद्वांसस्सन्ति वाक्यार्थजीविनः।।५८।।

काव्यार्थजीविनस्तावज्जन्मनैव सचेतसः।
यतस्तच्चित्तविश्रान्तिः काव्यार्थेनैव नान्यथा।।५९।।

अथ काव्यार्थरूपस्य काव्यस्यात्माऽपि कश्चन।
काव्यार्थ एव भवितुं सजातीयतयाऽर्हति।।६०।।

कोऽन्वसौ खलु काव्यार्थो यो हि काव्यात्मताग्रही।
वाल्मीकिनेव चेतव्यस्स एव राघवोपमः।।६१।।

वाच्यार्थो न स काव्यार्थो नूनं सकलगोचरः।
शब्दार्थोभयसङ्केतसम्बन्धेन नियन्त्रितः।।६२।।

लक्ष्यार्थोऽपि स काव्यार्थो भवितुं नार्हति ध्रुवम्।
कोविदेषु प्रयुक्तत्वात् स्थूणात्रयसमाश्रितः।।६३।।

नूनं सहृदयश्लाध्यो व्यङ्ग्यार्थ एव केवलम्।
काव्यार्थस्तादृशो यत्र मनो विश्राम्यति द्रुतम्।।६४।।

काव्यार्थभूतकाव्यस्य सजातीयतया स्थितः।
आत्मा स एव व्यङ्ग्यार्थ एवमानन्दवर्धनः।।६५।।

वाच्यार्थात्सर्वथा भिन्नो लक्ष्यार्थादपि दूरगः।
व्यङ्ग्यार्थोऽयं भवत्येव गूढगूढो विलक्षणः।।६६।।

इस भूतलपर शब्दशास्त्रज्ञ सम्मान्य वय्याकरण पदार्थ-जीवी माने जाते हैं (क्योंकि व्याकरण का लक्ष्य ही है पदों की तथा उनके अर्थों की सिद्धि) मीमांसाशास्त्र के पण्डित वाक्यार्थ-जीवी होते हैं।।५८।।

(परन्तु) सहृदय (साहित्यशास्त्रज्ञ) तो जन्म से ही काव्यार्थ-जीवी होते हैं क्योंकि उनकी चित्तविश्रान्ति मात्र काव्यार्थ से ही होती है, किसी अन्य वस्तु से नहीं।।५९।।

तो फिर काव्यार्थरूप काव्य की आत्माभी, सजातीय सम्बन्ध के कारण कोई न कोई काव्यार्थ ही होना चाहिये।।६०।।

तो फिर कौन हो सकता है वह काव्यार्थ जो काव्य की आत्मा बनने का दावा कर सके? प्राचेतस वाल्मीकि के द्वारा (अपने काव्यनायक) राघव की ही

भाँति, उस विशिष्ट काव्यार्थ की खोज की जानी चाहिये।।६१।।

**वाच्यार्थ** (=संकेतितार्थ, अभिधेयार्थ, मुख्यार्थ, कोषसम्मतार्थ) तो वह काव्यार्थ होने से रहा क्योंकि वह तो निस्सन्देह सकलगोचर (स्थूल) होता है। क्योंकि वह नियंत्रित (निश्चित) होता है शब्द एवं अर्थ के पारस्परिक संकेत-सम्बन्ध के कारण।।६२।।

**लक्ष्यार्थ** भी निश्चित रूप से वह (काव्यात्मभूत) काव्यार्थ नहीं हो सकता (उसके दो कारण हैं) एक तो वह मात्र कोविदों में ही व्यवहृत होता है (अतः उसका क्षेत्र संकीर्ण या संकुचित है) दूसरे, वह स्थूणात्रय (स्तम्भत्रय) पर टिका हुआ है अतः नैसर्गिक या सहज नहीं है, आरोपित मात्र है।।६३।।

निश्चय ही, एकमात्र सहृदयों द्वारा श्लाध्य **व्यङ्ग्यार्थ** ही उस प्रकार का काव्यार्थ है जिसमें चित्त द्रुतगति से विश्रान्त हो जाता है।।६४।।

काव्यार्थभूत काव्य के सजातीय धर्म वाला वही व्यङ्ग्यार्थ काव्य की आत्मा है, ऐसा आनन्दवर्धन कहते हैं।।६५।।

वाच्यार्थ से सर्वथा भिन्न और लक्ष्यार्थ से भी अलग-थलग यह व्यङ्ग्यार्थ होता ही है (स्वरूपदृष्ट्या) अतिशय गूढ (रहस्यमय) तथा विलक्षण ।।६६।।

**प्रतीतिरेव सम्भाव्या यतोऽर्थस्यास्य केवलम्।**<br>**ततः प्रतीयमानोऽर्थोऽप्ययं विद्भिस्समुच्यते।।६७।।**

**यथा गन्धो हि मृल्लोष्टे चिरकालं नु तिष्ठति।**<br>**यावच्चासौ न वर्षाभिः प्रसह्यानीयते बहिः।।६८।।**

**विद्यमानस्तथैवायं ननु वाच्यार्थगह्वरे।**<br>**यावन्न वाच्यसामर्थ्याक्षिप्तस्तावन्न व्यज्यते।।६९।।**

**ततश्चैव समाख्यातो लावण्यप्रतिमोऽप्ययम्।**<br>**लीनं यदङ्गनादेहे नैव निर्वर्ण्यते पृथक्।।७०।।**

**वक्त्रनेत्रकपोलादिदेहावयवसंश्रितम्।**<br>**सौन्दर्यन्तु विलासिन्याः सामान्यैरपि दृश्यते।।७१।।**

**किन्तु लावण्यतत्त्वन्तु ललनाया वपुः स्थितम्।**<br>**नागरैर्विरलैरेव लोचनाभ्यां निपीयते।।७२।।**

**तादृग्गुणविशिष्टोऽयं व्यङ्ग्यार्थः प्रतिभोत्थितः।**<br>**काव्यात्मेति मतं स्वीयं भणत्यानन्दवर्धनः।।७३।।**

**अधिष्ठितोऽप्यनेनैव व्यङ्ग्यार्थेन रसात्मना।**
**यो हि काव्यविशेषोऽङ्गी स ध्वनिः स्फुटमुच्यते।।७४।।**

**यत्र शब्दः स्वसङ्केतार्थमर्थोऽप्यस्तित्वमात्मनः।**
**गुणीकृत्य मिथो व्यङ्क्तो नवमर्थं विलक्षणम्।।७५।।**

**ध्रुवं काव्यविशेषोऽसौ जायते ध्वनिसंज्ञितः।**
**ध्वनिकार इति ब्रूते सप्रमाणमसंशयम्।।७६।।**

चूँकि इस काव्यार्थ की प्रतीतिमात्र होनी संभव है (इसे वाच्यार्थ अथवा लक्ष्यार्थ की भाँति शब्दार्थ के माध्यम से लिखा नहीं जा सकता) इसीलिये विद्वज्जनों द्वारा इसे **प्रतीयमानार्थ** भी कहा जाता है।।६७।।

जैसे मिट्टी के ढेले में गन्ध अनन्त काल तक रची-बसी रहती है जब तक कि जलवृष्टियों के द्वारा उसे जबर्दस्ती बाहर नहीं लाया जाता ।।६८।।

इसी प्रकार वाच्यार्थ के गह्वर में (अन्तराल में) निश्चित रूप से विद्यमान यह व्यङ्ग्यार्थ जब तक वाच्यार्थ के सामर्थ्य से आक्षिप्त नहीं होता, तब तक अभिव्यक्त नहीं हो पाता है।।६९।।

इसीलिये इस व्यङ्ग्यार्थ को **लावण्य** के समकक्ष भी माना गया है जो कि रमणी-शरीर में लीन रहता है (परन्तु) पृथक् परिलक्षित नहीं हो पाता।।७०।।

मुख, नेत्रयुगल, कपोल आदि शरीर के अंगों में संश्रित रमणी की सुन्दरता को तो ऐरे-गैरे (सामान्य सौन्दर्यचेतना वाले भी) भी जान लेते हैं।।७१।।

परन्तु रमणी के सांगोपांग व्यक्तित्व में परिव्याप्त **लावण्य-तत्त्व** तो विरले ही नागरों द्वारा नेत्रों द्वारा ग्राह्य हो पाता है।।७२।।

कविप्रतिभा-प्रसूत, तादृग्गुण-विशिष्ट अर्थात् लावण्य के ही समान गूढ़तया निर्वर्ण्यमान वह व्यङ्ग्यार्थ ही काव्य की आत्मा है, ऐसा स्वोपज्ञ मत प्रकट करते हैं आचार्य आनन्दवर्धन ।।७३।।

रसरूपी सर्वस्व से युक्त इसी व्यङ्ग्यार्थ द्वारा अधिष्ठित जो काव्यविशेष अङ्गी होता है उसे स्पष्टतः **ध्वनि** कहा जाता है।।७४।।

जहाँ (काव्य में प्रयुक्त शब्द) अपने संकेतित अर्थों को तथा अर्थ स्वयं अपने अस्तित्त्व को गौण बना कर, परस्पर समवेत भाव से (एक) नूतन, विलक्षण अर्थ को प्रकाशित करते हैं।।७५।।

निश्चित रूप से वह काव्य-विशेष ध्वनिकाव्य संज्ञा वाला होता है, ऐसा ध्वनिकार आनन्दवर्धन प्रमाणपूर्वक निस्सन्देह कहते हैं।।७६।।

**नूनं प्रतीयमानार्थो व्यङ्ग्यार्थाऽपरसंज्ञकः।**
**ध्वन्यर्थोऽपि ततश्चैव व्यञ्जनावादिभिर्मतः।।७७।।**

**मृल्लोष्टं दृश्यते दृग्भ्यां वर्षणञ्चापि दृश्यते।**
**किन्तु मृल्लोष्टगन्धोऽसौ व्यक्तःसूक्ष्मोऽनुभूयते।।७८।।**

**व्यङ्ग्यस्तथैव काव्यार्थः केवलं ह्यनुभूयते।**
**वस्त्वलङ्काररूपो वा रसरूपश्च वस्तुतः।।७९।।**

**ब्राह्मणश्रमणन्यायेनोभौ व्यङ्ग्यावपि ध्रुवम्।**
**कामं हि वस्त्वलङ्कारौ वाच्यतामुपगच्छतः।।८०।।**

**व्यङ्ग्यार्थः किन्तु योऽयं हि रसरूपोऽनुभूयते।**
**न स्वप्नेऽपि स शब्देन वाच्यतामुपगच्छति।।८१।।**

**तथा हि ध्वनिकारः-तृतीयस्तु रसादिलक्षणः प्रभेदो वाच्यसामर्थ्याक्षिप्तः प्रकाशते। न तु साक्षाच्छब्दव्यापारविषय इति वाच्याद्विभिन्न एव। तथा हि वाच्यत्वं तस्य स्वशब्दनिवेदितत्वेन वा स्यात् विभावादिप्रतिपादनमुखेन वा। पूर्वस्मिन् पक्षे स्वशब्दनिवेदितत्वाभावे रसादीनामप्रतीतिप्रसङ्गः। न च सर्वत्र तेषां स्वशब्दनिवेदितत्वम्। यत्राप्यस्ति तत्रापि विशिष्टविभावादि-प्रतिपादनमुखेनैवैषां प्रतीतिः। स्वशब्देन सा केवलमनूद्यते। न तु तत्कृता। विषयान्तरे तथा तस्या अदर्शनात्। नहि केवलश्रृङ्गारादिशब्दमात्रभाजि विभावादिप्रतिपादनरहिते काव्ये मनागपि रसवत्त्वप्रतीतिरस्ति। यतश्च स्वाभिधानमन्तरेण केवलेभ्योऽपि विभावादिभ्यो रसादीनां प्रतीतिः। केवलाच्च स्वाभिधानादप्रतीतिः। तस्मादन्वयव्यतिरेकाभ्यामभिधेयसामर्थ्याक्षिप्तत्वमेव रसादीनाम्। नत्वभिधेयत्वं कथञ्चित्। इति तृतीयोऽपि प्रभेदो वाच्याद्भिन्न एवेति स्थितम्। वाच्येन त्वस्य सहैव प्रतीतिरित्यग्रे दर्शयिष्यते।-ध्वन्या० २।४ वृत्तिः।**

निश्चय ही व्यङ्ग्यार्थरूपी अपर संज्ञा वाला प्रतीयमानार्थ इसीलिये व्यञ्जनावादी आचार्यों द्वारा ध्वन्यर्थ भी कहा जाता है।।७७।।

मिट्टी का ढेला नेत्रों से दिखाई पड़ता है, वर्षा भी दिखाई पड़ती है। परन्तु वर्षा के कारण, मिट्टी के ढेले में छिपी बैठी (परन्तु अब) बाहर निकली हुई वह गन्ध तो बस अनुभवमात्र की जाती है।।७८।।

ठीक उसी प्रकार व्यङ्ग्य (अभिव्यक्त अथवा प्रकाशित होने वाला) अर्थ केवल अनुभव काविषय होता है-वस्तु के रूप में अथवा अलंकार के रूप में। परन्तु **परमार्थतः** रस के रूप में।।७९।।

वस्तु एवं अलंकार रूप दोनों व्यङ्ग्यार्थ तो निश्चित रूप से **ब्राह्मणश्रमणन्यायेन** भले ही वाच्यता को प्राप्त हो जॉय।।८०।।

परन्तु रस के रूप में जो व्यङ्ग्यार्थ अनुभव किया जाता है वह तो स्वप्न में भी शब्दों के माध्यम से वाच्यता को प्राप्त नहीं करता (वह सदैव व्यङ्ग्य ही होता है)।।८१।।

जैसा कि ध्वनिकार कहते हैं-तीसरा (व्यङ्ग्यार्थ) रसादि लक्षण वाला है जो कि वाच्य की सामर्थ्य से आक्षिप्त होकर ही प्रकाशित हो पाता है। वह साक्षात् शब्द-व्यापारका विषय न होने के कारण वाच्यार्थ से भिन्न ही है। क्योंकि उसकी वाच्यता तो दो ही प्रकारसे संभव है-या तो वह स्वशब्द से निवेदित (प्रकट) होने वाला हो अथवा (अनुकूल) विभावादि के प्रतिपादन द्वारा। यदि पहला पक्ष माना जाय तो फिर स्वशब्द-निवेदितत्व के अभाव में रसादि की अप्रतीति का प्रसंग उठना चाहिये। परन्तु सर्वत्र तो रसादि का स्वशब्दनिवेदितत्त्व होता (दीखता) नहीं। जहाँ कहीं है भी, वहाँ भी विशिष्टकोटिक विभावादि के प्रतिपादन के माध्यम से ही उनकी प्रतीति होती है। स्वशब्द से तो बस, उनका अनुवदनमात्र होता है। न कि स्वशब्द मात्र से उनकी प्रतीति होती है। विषयान्तर में, उस रूप में उसकी अनुपलब्धि होने के कारण।

केवल **शृङ्गारादि** शब्द से युक्त (परन्तु) विभावादि के प्रतिपादन से रहित काव्य में तिलभर भी रस-प्रतीति नहीं होती है। परन्तु 'शृङ्गारादि' (स्वाभिधान) का प्रयोग न भी हो, मात्र विभावादिकों का प्रतिपादन हो तो भी रसादिकों की प्रतीति होती है। परन्तु अभिधान मात्र से प्रतीति नहीं होती है।

इस प्रकार, अन्वय-व्यतिरेक (व्याप्ति) से यही सिद्ध होता है कि रसादि अभिधेय के सामर्थ्य से ही आक्षिप्त होते हैं। न कि स्वयं **अभिहित** होते हैं (वाच्यार्थ के रूप में) इस प्रकार तीसरा भी (व्यङ्ग्यार्थरूप) भेद वाच्य से भिन्न ही सिद्ध होता है। वाच्यार्थ के साथ ही इसकी प्रतीति होती है, ऐसा आगे दिखाया जायेगा। ध्वन्या० १।४ की वृत्ति।

**स च ध्वनिरविवक्षितवाच्यविवक्षितान्यपरवाच्यभेदाभ्यां द्विविधः।**

तदवान्तरभेदा यथा-अर्थान्तरसङ्क्रमितवाच्योऽत्यन्ततिरस्कृतवाच्यश्चेति द्वौ भेदावविवक्षितवाच्यस्य। असंलक्ष्यक्रमव्यङ्ग्यः संलक्ष्यक्रमव्यङ्ग्यश्चेति द्वौ भेदौ विवक्षितान्यपरवाच्यध्वनेः। स सर्वोऽपि प्रपञ्चो यथायथं निरूपित आकरग्रन्थेष्वेव द्रष्टव्यः।

इति ध्वन्यात्मत्वप्रकरणम्। अत्रात्मतत्त्वोन्मेषे कारिकासंख्या-८१

।।इति श्रीमद्गौतमगोत्रोत्पन्नस्य भभयाख्यमिश्रवंशावतंसस्य।।
श्रीमद्दुर्गाप्रसादाभिराजीतनूजस्य पण्डितप्रकाण्ड-
श्रीमदाद्याप्रसादमिश्रभ्रात्रीयस्य त्रिवेणीकवि-
संज्ञितस्याभिराजराजेन्द्रस्याभिनवे काव्य-
शास्त्रेऽभिराजयशोभूषणे आत्म-
तत्त्वोन्मेषाख्यस्तृतीयोंशः।

वह ध्वनि अविवक्षितवाच्य तथा विवक्षितान्यपरवाच्य के भेद से दो प्रकार की होती है। उन्हीं के अवान्तर भेद इस प्रकार हैं-अर्थान्तरसंक्रमितवाच्य तथा अत्यन्ततिरस्कृतवाच्य-ये दो भेद अविवक्षितवाच्य ध्वनि के तथा असंलक्ष्य-क्रमव्यङ्ग्य एवं संलक्ष्यक्रमव्यङ्ग्य-ये दो भेद विवक्षितान्यपरवाच्य ध्वनि के। यह सारा ध्वनि-प्रपञ्च यथोचित रूप से निरूपित किया गया, आकर ग्रंथों में ही द्रष्टव्य है।

ध्वन्यात्मप्रकरण इस प्रकार समाप्त हुआ। इस आत्मतत्त्वोन्मेष में कारिकाओं की संख्या ८१ है।

**इस प्रकार, श्रीमद् गौतमगोत्रोत्पन्न भभयानामक मिश्र-वंश के अलंकारभूत, महाभागवत पं० रामानन्द मिश्र के पौत्र, श्रीमान् पं० दुर्गाप्रसादमिश्र एवं अभिराजी देवी के मध्यमपुत्र, पण्डितप्रकाण्ड आचार्य आद्याप्रसादमिश्र के भ्रात्रीय, त्रिवेणीकवि, अभिराजराजेन्द्र द्वारा प्रणीत अभिनव काव्यशास्त्र अभिराजयशोभूषण में आत्मतत्त्वोन्मेष नामक यह तृतीय अंश समाप्त हुआ।**

***

# अभिराजयशोभूषणम्

## ।।निर्मितितत्त्वोन्मेषः।।

काव्यं रसात्मकं चेदं शब्दार्थैककलेवरम्।
भिद्यते खलु निर्मित्या रुचिरूपप्रभेदतः।।१।।

कुलालो हि भ्रमच्चक्रे स्वरुचिं पोषयन्यथा।
विविधाकृतिपात्राणि निर्मात्येव निरन्तरम्।।२।।

कुलालरुचिभेदाद्धि पात्रभेदः प्रजायते।
यथा, तथा कवेः प्रीत्या काव्यमेतत्पृथक्पृथक्।।३।।

रूपदृष्ट्यापि काव्यानि भिद्यन्ते हि परस्परम्।
गद्यं पद्यञ्च मिश्रञ्च त्रयमेतदुदाहृतम्।।४।।

प्रभेदा बहवस्तत्र सन्ति गद्यादिषु त्रिषु।
सविस्तरञ्च तत्सर्वं मया सम्प्रति तन्यते।।५।।

पुष्कला खलु सामग्री पूर्वाचार्यैर्निरूपिता।
संयोज्यते तया सार्धं स्वपक्षोऽप्यधुनातनः।।६।।

न तावद्राष्ट्रमिदं भारताख्यं सम्प्रति प्राक्स्वरूपमाधत्ते। नेदानीं राजानो न वा तेषां पृथग्राज्यानि। न कुत्रापि गमनाऽगमनप्रत्यवायः। समग्रमपि राष्ट्रमाकाश्मीरात्केरलं यावदापञ्चनदराज्यान्मिजोरमं यावदेकसूत्रग्रथितमिदानीं जीवति। विकसितानि सञ्चारसाधनानि। रेडियोदूरदर्शनाद्याविष्करणैः समग्रमपि विश्वमेकनीडायतेऽधुना। भाषान्तरमानदण्डाः शिल्पानि च यथारुचि प्रयुज्यन्ते सर्वभाषाकविभिः।

शब्द एवं अर्थ (समष्टि) रूप एकमात्र शरीर वाला यह रसात्मक काव्य, अभिरुचि एवं रूप (आकार-प्रकार) के प्रभेद से-निर्मिति दृष्ट्या भिन्न होता है।।१।।

जैसे अपनी अभिरुचि (पसन्द) को ध्यान में रखकर कुम्भकार, घूमते हुए चक्र पर विविध आकृति के पात्रों का निरन्तर निर्माण करता ही रहता है।।२।।

और जैसे कुम्भकार की पसन्द के भेद से ही पात्रों में भी भिन्नता पैदा हो जाती है, ठीक उसी प्रकार कवि की प्रीति (पसन्द) के ही कारण यह काव्य भी पृथक्-पृथक् (रूपवाला) होता है।।३।।

रूप की दृष्टि से भी काव्य आपस में ही भिन्न होते हैं। गद्य, पद्य एवं मिश्र उनके ये तीन रूप (पूर्वसूरियों द्वारा) उदाहृत किये गये हैं।।४।।

उन गद्यादि तीनों भेदों के भी अनेक प्रभेद बताये गये हैं। वह सब अब मेरे द्वारा सविस्तर निरूपित किया जा रहा है।।५।।

पूर्वाचार्यों द्वारा (एतद्विषयक) पुष्कल सामग्री निरूपित की गई है। उस सामग्री के साथ, अपना अधुनातन पक्ष (नई सामग्री) मेरे द्वारा जोड़ा जा रहा है।।६।।

**भारत** नामवाला यह राष्ट्र आज अपने प्राचीन स्वरूप को धारण नहीं कर रहा है। आज न (शासन करने वाले) राजा हैं न ही उनके पृथक्-पृथक् राज्य! न ही कहीं भी (पुराने-जमाने जैसी) आने-जाने की विघ्न-बाधा! काश्मीर से लेकर केरल तक तथा पञ्जाब से लेकर मिजोरम तक सम्पूर्ण राष्ट्र सम्प्रति एकसूत्रता में ग्रथित हुआ जी रहा है। सञ्चार के साधन विकसित हो चले हैं। रेडियो तथा दूरदर्शन आदि के आविष्कारों से सम्पूर्ण विश्व अब एक घोंसले सा प्रतीत होने लगा है। समस्त (भारतीय) भाषाओं के कवियों द्वारा, अपनी रुचि के अनुसार, निजेतर भाषाओं के (साहित्यिक) मानदण्ड एवं शिल्प व्यवहार में लाये जाने लगे हैं।

**काव्यस्य ये प्रभेदाः प्राग्भूपदृष्ट्यैव कल्पिताः।**
**समाप्ते राजतन्त्रे ते कालातीता अथाऽभवन्।।७।।**

**नूतनाश्चापि धौरेया लोकतन्त्रे प्रतिष्ठिते।**
**सञ्जाताः सद्गुणाधारा लोकनायकताङ्गताः।।८।।**

**तादृग्गुणविशिष्टान्वै प्रशस्तचरिताश्रयान्।**
**समालम्ब्यापि काव्यानि प्रणीयन्ते कवीश्वरैः।।९।।**

नूतनानि महाकाव्यानि क्रियन्ते तद्यथा-अमीरचन्द्रशास्त्रिविरचितं जवाहरलालनेहरूचरितम् बलभद्रप्रसादशास्त्रिविरचितमिन्दिराजीवनम् गजाननबालकृष्णपलसुलेविरचितं वैनायकम् सुबोधचन्द्रपन्तविरचितं झाँसीश्वरी चरितम् माधवहरिअणेविरचितस्तिलकयशोऽर्णवः ब्रह्मानन्द-शुक्लविरचितं नेहरूचरितं गान्धिचरितञ्च विश्वनाथकेशवछत्रेविरचितं सुभाषचरितमित्येवम्।

एतत्सर्वं मया सविस्तरं निरूपितं स्वोपज्ञे विंशशताब्दीसंस्कृत-ग्रन्थसूचीपत्रे। तत्रैव द्रष्टव्यम्।

केचित्काव्यप्रकाराश्च भाषान्तरप्रयोजिताः।
ये हि लोकप्रियाः सन्ति भावसंवेदनक्षमाः।।१०।।

आत्मतुष्ट्यर्थमद्यत्वे हाइकू-तानकादयः।
संस्कृतरचनाकारैरभिव्यक्त्यर्थमाहृताः।।११।।

तच्च नाऽनुचितं मन्ये नूनं स्वरुचिपोषणात्।
कल्पितत्वात्प्रकाराणां काव्यस्यापि सुनिश्चितम्।।१२।।

स्वतन्त्राः कवयस्सर्वे शास्त्रकाराश्च पण्डिताः।
निर्मितेन पथा यान्ति क्व ते कण्ठीरवा इव।।१३।।

जयन्तु मतभेदास्ते तेषां विषमचेतसाम्।
यन्महिम्नैव सञ्जातं काव्यशास्त्रं बृहत्तमम्।।१४।।

इस प्रकार, काव्य के जो विशिष्ट भेद पहले, राजा को ही दृष्टि (केन्द्र) में रख कर कल्पित किये गये थे, वे राजतंत्र के समाप्त होते ही (स्वयमेव) कालातीत हो गये।।७।।

(दूसरी ओर) लोकतंत्र के प्रतिष्ठित होते ही सद् गुणों के आधार नये प्रकार के मुखिया लोग लोकनायकता को प्राप्त हो गये।।८।।

उस प्रकार के सद् गुणों से श्रीमण्डित, प्रशस्त चरित वाले लोगों को भी आश्रय बना कर श्रेष्ठ कवियों द्वारा (आज) काव्य लिखे जा रहे हैं।।९।।

नूतन महाकाव्य लिखे जा रहे हैं जैसे अमीरचन्द्रशास्त्रि-विरचित जवाहरलालनेहरूचरितम्, बलभद्रप्रसादशास्त्रि-विरचित इन्दिराजीवनम्, गजानन बालकृष्ण पलसुले-विरचित वैनायकम्, सुबोधचन्द्र पन्त-विरचित झाँसीश्वरीचरितम्, माधव हरि अणे-विरचित तिलकयशोऽर्णवः, ब्रह्मानन्दशुक्ल-विरचित नेहरूचरितम् तथा गान्धिचरितम्, विश्वनाथकेशवछत्रे-विरचित सुभाषचरितम् आदि।

यह सब मैने स्वरचित ग्रंथ विंशशताब्दीसंस्कृतग्रंथसूचीपत्रम् में विस्तार के साथ निरूपित किया है। वहीं देखना चाहिये।

दूसरी (देशी अथवा विदेशी) भाषाओं में प्रयुक्त काव्य की कुछ विधायें जो कि भावसंवेदन में समर्थ हैं तथा लोकप्रियता अर्जित कर चुकी हैं।।१०।।

हाइकू तथा तान्का आदि ऐसी विधायें आजकल संस्कृत रचनाकारों द्वारा (भी) आत्मतुष्टि के लिये, भावाभिव्यक्ति-हेतु ग्रहण की जा रही हैं।।११।।

मैं सचमुच उसे अनुचित नहीं मानता (क्योंकि) उससे कवि की अपनी

अभिरुचि का पोषण होता है। काव्यविधाओं के कल्पितत्त्व के कारण भी, निश्चित रूप से (मैं उन्हें अनुचित नहीं मानता)।।१२।।

समस्त (क्रान्तदर्शी) कवि, शास्त्रकार एवं पण्डित सर्वतंत्र-स्वतंत्र होते हैं। बने-बनाये मार्ग से भला वे कहाँ चलते हैं-बबर शेर की तरह।।१३।।

अतएव विषम (एक-दूसरे से भिन्न) चित्तवृत्ति वाले उन कवियों के उन मत-भेदों की जय हो जिनकी महिमा से ही काव्यशास्त्र का अतिशय विस्तार हो सका है।।१४।।

## ।।अथ काव्यभेदनिरूपणम्।।

रुचिवैचित्र्यमूलैव सृष्टिरेषा चतुर्विधा।
रुचिवैषम्यमूलञ्च वाङ्मयं भूरिविस्तरम्।।१५।।

ततश्चेदं नु वैषम्यं सृष्टिबीजमनिन्दितम्।
अभिनन्द्यं हि सर्वेषु क्षेत्रेष्विति मतिर्मम।।१६।।

प्रत्नं यच्चाप्युपादेयं प्रासङ्गिकमथोत्तमम्।
प्रत्यग्रमपरिहार्यं नवानां मार्गदर्शकम्।।१७।।

तदादाय विवेकेन ताटस्थ्यञ्च समाश्रयन्।
करोमि काव्यकृद्भूत्यै काव्यभेदनिरूपणम्।।१८।।

दृश्यश्रव्यप्रकाराभ्यामादौ काव्यं द्विधा मतम्।
रूपरूपकनाट्यानि दृश्यनामान्तराणि च।।१९।।

रूपं दृश्यतयाऽऽख्यातं नाट्यमङ्गप्रचालनात्।
नटे रामादिरूपाणामारोपादथ रूपकम्।।२०।।

दृश्यं तत्राभिनेयं स्यादधिमञ्चं प्रयोक्तृभिः।
अवस्थानुकरणाढ्यं नेत्रश्रुतिरसायनम्।।२१।।

यो हि प्रत्नं कथावस्तु समक्षमानयेद् ध्रुवम्।
स एवाभिनयः ख्यातः प्रेक्षावद्भिश्चतुर्विधः।।२२।।

(वस्तुतः) यह चतुर्विध (पिण्डज, अण्डज, स्वेदज, उद्भिज्ज) सृष्टि ही (विधाता की) रुचि के वैचित्र्य पर आधारित है। (ठीक यूँ ही) प्रभूत विस्तार वाला वाङ्मय भी (रचनाकारों के) रुचि-वैषम्य से विकसित हुआ है।।१५।।

इसलिये, यह प्रशंसनीय तथा सृष्टिबीजभूत **वैषम्य** समस्त क्षेत्रों में अभिनन्दन-योग्य है, ऐसी मेरी सोच है।।१६।।

**प्राचीन** जो भी (आज के युग में भी) उपादेय है, प्रासंगिक है तथा उत्तमकोटिक है, ताजा है, अपरिहार्य है तथा नये रचनाकारों के लिये पथप्रदर्शक है।।१७।।

उसे विवेकपूर्वक ग्रहण करते हुए तथा तटस्थता (पूर्वाग्रहमुक्तता) का सहारा लेते हुए, काव्यकारों के कल्याणार्थ मैं काव्यप्रकारों का निरूपण कर रहा हूँ।।१८।।

दृश्य एवं श्रव्य प्रकारों के माध्यम से सर्वप्रथम काव्य दो प्रकार का बताया गया है। दृश्य काव्य की कुछ और भी संज्ञायें हैं-रूप, रूपक तथा नाट्य।।१९।।

दृश्यता (दर्शनेन्द्रियविषयता) के कारण (दृश्यकाव्य को) **रूप** कहते हैं, अंगोपाङ्गों का संचालन होने के कारण उसे **नाट्य** कहते हैं तथा (साम्प्रतिक) नटों के ऊपर (त्रेतायुगीन) रामादि पात्रों के रूप का आरोप होने के कारण उसे **रूपक** कहते हैं।।२०।।

इन दोनों भेदों में दृश्यकाव्य रंगमञ्च के ऊपर, प्रयोगकर्मी अभिनेताओं द्वारा अभिनेय होता है जो कि (रामादि पात्रों की) अवस्थाओं के अनुकरणों से भरा-पुरा होता है (फलतः) नेत्रों एवं कानों के लिये रसायनकल्प (भी)।।२१।।

जो प्राचीन कथावस्तु को निस्सन्देह समक्ष उपस्थित कर दे वही **अभिनय** कहा जाता है तथा विद्वज्जनों द्वारा चार प्रकार का (आंगिक, वाचिक, आहार्य तथा सात्त्विक) बताया गया है।।२२।।

**अभि समक्षं नयति प्रापयति प्राचीनं कथावस्त्वित्यभिनय इत्यभिनवगुप्तपादाचार्योऽभिनवभारत्याम्। अभिनयद्वारा प्राचीनाः सन्तोऽपि रामादयस्साक्षात् प्रत्यक्षीक्रियन्ते। किं वैशिष्ट्यमभिनयस्येति सम्प्रत्युच्यते।**

**आङ्गिकवाचिकाहार्याः सात्त्विकश्चान्तिमो मतः।**<br>**प्रत्येकमेषां स्वस्थाने प्रामुख्येण महीयते।।२३।।**

**दृश्यकाव्यमिदं भूयो विभक्तं सूरिभिर्द्विधा।**<br>**रूपकं प्रथमं तत्र द्वितीयमुपरूपकम्।।२४।।**

**नाटकं च प्रकरणं भाणः प्रहसनं तथा।**<br>**व्यायोगसमवकारौ डिमेहामृगवीथयः।।२५।।**

अङ्कश्चेत्युपदिष्टानि रूपकाणि पुनर्दश।
यथोचितं गृहीतानि देवमानवनायकैः।।२६।।

अथोपरूपकाणि-

नाटिका भाणिका गोष्ठी दुर्मल्ली च विलासिका।
त्रोटकं सट्टकं काव्यं रासकं नाट्यरासकम्।।२७।।

संलापकं श्रीगदितं प्रेङ्खणञ्चापि शिल्पकम्।
हल्लीशः प्रकरणी च प्रस्थानमुल्लाप्यकम्।।२८।।

एतान्यष्टादशोक्तानि प्रायेणैकाङ्कवन्ति च।
उपरूपकवृन्दानि नाट्यशास्त्रविशारदैः।।२९।।

रूपकाणां दशमितानामुपरूपकाणाञ्चाष्टादशमितानां लक्षणानि द्रष्टव्यानि दशरूपकादिषु। तत्र लोकप्रियतायाः धुरि स्थितं नाटकमद्यापि भूयस्त्वेन प्रणीयत इति कृत्वा नवयुगानुकूलं तल्लक्षणं प्रस्तूयते।

अभि का अर्थ है-समक्ष, आँखों के सामने। वहाँ ले आये, पहुँचा दे प्राचीन कथावस्तु को जो उसे अभिनय कहते हैं, ऐसा मन्तव्य है अभिनवगुप्तपादाचार्य का (नाट्यशास्त्र की टीका) अभिनवभारती में। अभिनय के माध्यम से ही, प्राचीन (त्रेतायुगीन) होते हुए भी रामादि पात्र साक्षात् प्रत्यक्षीकृत हो जाते हैं। अभिनय का क्या वैशिष्ट्य होता है? इसे अब बताया जा रहा है।

अभिनय चार प्रकार के होते हैं-आङ्गिक, वाचिक, आहार्य तथा अन्तिम-सात्त्विक। इनमें से प्रत्येक, अपने स्थान (सन्दर्भ) पर प्रमुख होने के कारण महनीय होता है।।२३।।

यह दृश्यकाव्य पुनः आचार्यों द्वारा द्विधा विभक्त किया गया है। पहला है-रूपक तथा दूसरा है-उपरूपक।।२४।।

नाटक, प्रकरण, भाण, प्रहसन, व्यायोग, समवकार, डिम, ईहामृग, वीथी तथा अंक ये दश भेद रूपक के बताये गये हैं। जैसा जहाँ उचित है इनके नायक देव अथवा मानवकोटिक होते हैं।।२५, २६।।

उपरूपक-

नाटिका, भाणिका, गोष्ठी, दुर्मल्ली (दुर्मल्लिका) विलासिका, त्रोटक, सट्टक, काव्य, रासक, नाट्यरासक, संलापक, श्रीगदित, प्रेङ्खण (प्रेक्षणक) शिल्पक,

हल्लीश, प्रकरणी, प्रस्थान तथा उल्लाप्यक-ये अट्ठारह भेद नाट्याचार्यों द्वारा उपरूपक के बताये गये हैं जो प्रायेण एकाङ्की कोटि के हैं।।२७-२९।।

दस संख्या वाले रूपकों तथा अठारह संख्या वाले उपरूपकों के लक्षण **दशरूपक** आदि (नाट्यशास्त्रीय) ग्रंथों में द्रष्टव्य है। उनमें, लोकप्रियता के शिखर पर स्थित **नाटक** आज भी पुष्कल मात्रा में लिखा जा रहा है, ऐसा मान कर उसका नवयुगानुकूल लक्षण लिखा जा रहा है।

**नाटकलक्षणम्-**

**नाटकं ख्यातवृत्तं स्यात्पञ्चसन्धिसमन्वितम्।**
**पञ्चभिः सप्तभिश्चाङ्कैर्दशभिर्वा प्रपञ्चितम्।।३०।।**

**धीरोदात्तो भवेन्नेता प्रतापैश्वर्यमण्डितः।**
**देवो भूपोऽथवा कश्चिद् गुणवांल्लोकनायकः।।३१।।**

**नायकस्थापने यत्र लिङ्गभेदो न गण्यते।**
**महिलापि ततो नेता स्यादौदात्यमहीयसी।।३२।।**

**शृङ्गारः करुणो वीरश्शान्तो वाङ्गी रसो भवेत्।**
**शेषा यान्तु तदङ्गत्वं स्यान्निर्वहणमद्भुतम्।।३३।।**

**राष्ट्रोदयं गुणैश्वर्यं लोकजीवनमङ्गलम्।**
**न्यायसत्यदयाधर्मसौजन्यादिसृतेर्जयम्।।३४।।**

**स्थापयेन्नाटकं नूनं लक्ष्यीकृत्य यथोचितम्।**
**येन लोकस्सदाचारोच्छ्रितमार्गं समाश्रयेत्।।३५।।**

**उद्वेगाऽमङ्गलव्रीडारक्तपातादिसंश्रितम्।**
**दृश्यं न चित्रयेन्नाट्ये रङ्गविक्षोभकारकम्।।३६।।**

**यच्च सत्यं शिवं भूयात्सुन्दरञ्च सुखावहम्।**
**जनानुरागवर्धिष्णु तत्परिकल्प्य वर्णयेत्।।३७।।**

**राष्ट्रोदयपरं यथा प्रतापविजयं मूलशङ्करयाज्ञिकस्य छत्रपतिसाम्राज्यं तस्यैव, वीरप्रतापं मथुरानाथदीक्षितस्य भारतविजयञ्चापि तस्यैव। गुणैश्वर्यपरं यथा भक्तसुदर्शनं मथुरानाथदीक्षितस्य, लक्ष्मीस्वयंवरं वेङ्कटराघवस्य, शिवाजिचरितं हरिदाससिद्धान्तवागीशस्य।**

प्रख्यात कथानक वाला, पञ्चसन्धियों से समन्वित तथा पाँच, सात अथवा दश अंकों में विभक्त (विस्तारित) होता है नाटक।।३०।।

प्रताप एवं ऐश्वर्य से मण्डित धीरोदात्त चरित्र वाला कोई देवता, राजा अथवा गुणवान् लोकसत्पुरुष नाटक का नायक होना चाहिये।।३१।।

नाटक में नायक निश्चय करते समय लिङ्गभेद (स्त्री अथवा पुरुष का भेद) को महत्त्व नहीं देना चाहिये। इसलिये औदात्त्य से महिमान्वित कोई महिला भी नाटक का नेता हो सकती है।।३२।।

शृङ्गार, करुण, वीर एवं शान्त में से कोई एक प्रधान रस होना चाहिये। शेष रस प्रधान रस के अंगभूत हों। हाँ निर्वहण में (अनिवार्यतः) अद्‌भुत रस हो।।३३।।

राष्ट्र का अभ्युदय, सद्‌गुणों का ऐश्वर्य, लोकजीवन का मंगल, न्याय, सत्य, दया, धर्म तथा सौजन्यादि-सरणियों की विजय।।३४।।

जैसा उचित (कथानुकूल) हो, किसी एक को, नाटक में लक्ष्य बना कर प्रतिष्ठित करना चाहिये जिससे कि (पाठक) समाज सदाचार के श्रेयस्कर मार्ग का वरण कर सके।।३५।।

उद्‌वेग, अमंगल, लज्जाजनक दृश्य, रक्तपातादि पर आधारित दृश्य, जिनसे रंग (दर्शकों) का विक्षोभ होता हो, का नाटक में चित्रण नहीं होना चाहिये।।३६।।

जो सत्य हो, कल्याणकर हो तथा सुन्दर (समञ्जस) हो, जो सुखावह हो तथा जनानुराग को बढ़ाने वाला हो ऐसे इतिवृत्त को परिकल्पित करके भी (नाटक में) वर्णित करना चाहिये।।३७।।

राष्ट्रोदयपर नाटक जैसे मूलशङ्कर याज्ञिक का प्रतापविजयम्, उन्हीं का (दूसरा नाटक) छत्रपतिसाम्राज्यम्, मथुरानाथ दीक्षित-प्रणीत वीरप्रतापम् तथा भारतविजयम्। गुणैश्वर्यपर नाटक जैसे मथुरानाथ दीक्षित का भक्तसुदर्शनम्, वेङ्कटराघव का लक्ष्मीस्वयंवरम्, हरिदास सिद्धान्तवागीश-प्रणीत शिवाजिचरितम्।

विवेकानन्दविजयं श्रीधरभास्करवर्णेकरस्य, चाणक्यविजयं विश्वेश्वरविद्याभूषणस्य, प्रेमपीयूषं राधावल्लभस्य, सिद्धार्थचरितं वीरेन्द्र-कुमारभट्टाचार्यस्य। एवमेव न्यायसत्यादिजयपरं यथा शिखाबन्धनं कर्णार्जुनीयञ्च रामाशीषपाण्डेयस्य, बँगलादेशविजयं पद्मशास्त्रिणः, स्नेहसौवीरं त्रिपाठिभास्कराचार्यस्य, मणिहरणं जग्गूबकुलभूषणस्य, शिविवैभवं जग्गूशिङ्गरार्यस्य। लोकमङ्गलपरं यथा नारीजागरणं गोपाल-

शास्त्रिणः, भारतलक्ष्मीर्यतीन्द्रविमलचतुर्धुरीणस्य, सुसंहतभारतं पुल्लेल-रामचन्द्रस्य, सनातनधर्मसर्वस्वं सदाशिवतीर्थस्य, रक्तदानं वनेश्वर-पाठकस्य, विभ्रान्तनारदं तस्यैव, तण्डुलप्रस्थीयं त्रिपाठिराधावल्लभस्य। यथा वा ममैव प्रशान्तराघवं लीलाभोजराजञ्च। नाटकानां संख्या भूयसी।

अयं तावद् दिङ्मात्रनिर्देशः। सविस्तरं मदुपज्ञे विंशशताब्दी-संस्कृतग्रन्थसूचीपत्रे द्रष्टव्यम्।

वृत्तं प्रकरणादीनां यथा साहित्यदर्पणे।
व्यवस्थितं तथा ग्राह्यं विमतिर्नात्र कापि मे।।३८।।

लक्षणेऽप्युपरूपाणां ननु साहित्यदर्पणः।
प्रमाणमेकमात्रं तन्निर्मितिभावितात्मनाम्।।३९।।

यद्यपि नाटकमेव सम्प्रति प्रचुरतया प्रणीयते रूपकपक्षधरैः। तथैवोपरूपभेदो नाटिका संख्यादृष्ट्या भूयसी परिलक्ष्यते। प्रहसनञ्चापि व्यभिचरितलक्षणमिदानीं लोकप्रियताया धुरि तिष्ठति। भेदान्तराणि तावद्रूपकोपरूपकयोः सङ्कीर्णान्येव।

श्रीधरभास्करवर्णेकर का विवेकानन्दविजयम्, विश्वेश्वरविद्याभूषण का चाणक्यविजयम्, राधावल्लभ-प्रणीत प्रेमपीयूषम्, वीरेन्द्रकुमारभट्टाचार्य-प्रणीत सिद्धार्थचरितम्। इसी प्रकार न्याय-सत्यादिविजयपरक नाटकों में जैसे रामाशीषपाण्डेय-कृत शिखाबन्धनम् तथा कर्णार्जुनीयम्, पद्मशास्त्री का बँगलादेशविजयम्, भास्कराचार्यत्रिपाठिकृत स्नेहसौवीरम्, जग्गू बकुलभूषण-कृत मणिहरणम् तथा जग्गू शिङ्गरार्यकृत शिविवैभवम्!

लोकमंगलपरक नाटक जैसे गोपालशास्त्री का नारीजागरणम्, यतीन्द्रविमल चौधरी का भारतलक्ष्मीः, पुल्लेल रामचन्द्रुडु का सुसंहतभारतम्, सदाशिव तीर्थ का सनातनधर्मसर्वस्वम्, वनेश्वरपाठक का रक्तदानम् एवं विभ्रान्तनारदम् तथा राधावल्लभत्रिपाठी का तण्डुलप्रस्थीयम्। अथवा जैसे मेरी ही कृति प्रशान्तराघवम् तथा लीलाभोजराजम्।

नाटकों की संख्या प्रभूत है।

यह तो दिङ्मात्र-निर्देश है। मेरे ग्रंथ विंशशताब्दीसंस्कृतग्रन्थसूचीपत्रम् में इन्हें विस्तारपूर्वक देखना चाहिये।

प्रकरण आदि (दशरूपक-भेदों) का इतिवृत्त जैसा व्यवस्थित है

साहित्यदर्पण में वैसा ही ग्रहण (स्वीकार) करना चाहिये। उस विषय में मेरा कोई वैमत्य नहीं है।।३८।।

उपरूपकों के लक्षण में भी निश्चय ही, एकमात्र प्रमाण साहित्यदर्पण ही है, उनके प्रणयनार्थ उत्कण्ठित रचनाकारों के लिये।।३९।।

यद्यपि रूपक-रचना के पक्षधरों द्वारा इस समय **नाटक** ही प्रचुरता के साथ लिखे जा रहे हैं (अन्य रूपक-भेद नहीं) उसी प्रकार, उपरूपकों का भेद-विशेष **नाटिका** संख्या की दृष्टि से सर्वाधिक दिखाई पड़ रही है।

**प्रहसन** भी, जिसके लक्षणानुपालन में एकरूपता नहीं बरती जा रही है, इस समय लोकप्रियता के शिखर पर विद्यमान है। रूपक तथा उपरूपक के अन्यान्य भेद तो (रचना की दृष्टि से) प्रायः संकीर्ण ही हैं।

**तत्र प्रकरणं यथा राधावल्लभप्रणीतं तण्डुलप्रस्थीयम्। भाणो यथा ममैव फण्टूस-(प्रत्यूष) चरितभाणः।**

**व्यायोगसमवकारडिमेहामृगवीथ्यङ्कोदाहरणानि गवेषणीयानि। व्यभि-चरितलक्षणानां प्रहसनानामपि संख्या भूयसी। तत्र मुकुन्दरामशास्त्रि-नारायणशास्त्रिकाङ्कररमाकान्तशुक्ल-राधावल्लभ-सुन्दरराज-ओगे-टिपरीक्षिच्छर्म-पूजालाल-घनश्यामत्रिवेदिहरिदत्तशर्म-रामकृष्णमूर्ति-कृष्णलाल-शिवप्रसादभारद्वाज-रामकिशोरमिश्र-वेदकुमारीप्रभृतीनां प्रहसनानि महीयन्ते।**

**मदुपज्ञेषु प्रायेण द्विषष्टिमितेष्वेकाङ्केषु भूयांसि प्रहसनान्येव। तद्यथा-नवरसप्रहसनं, स्वप्नाज्जागरणं वरम्, इन्द्रजालम्, मोदकं केन भक्षितम्, वाणीघटकमेलकम्, बधिरप्रहसनम्, साक्षात्कारः, मण्डूकप्रहसनम्, प्रतिभापरीक्षणम्, वादनिर्णयनम्, संवाददातृसम्मेलनम्, प्रत्यक्षरौरवम्, क्रीतानन्दम्, स्वयंवरकेन्द्रम्, शारदावमाननञ्चेति।**

अथैकाङ्किसन्दर्भः-

हिन्दीप्रभृतिभाषासु भारतीयासु साम्प्रतम्।
लघुनाट्यं यदेकाङ्कि सर्वाभीष्टं महीयते।।४०।।

देववाच्यपि तन्नूनं तद्वदेव प्रतिष्ठितम्।
नियन्त्रितं न तज्ज्ञेयमुपरूपकलक्षणैः।।४१।।

**नायकोऽत्र भवेद्भूपः पण्डितः पामरोऽथवा।**
**दिव्योऽदिव्योऽथवाऽन्योऽपि शिक्षकोभिक्षुको यतिः।।४२।।**

**योऽपि कश्चिद् भवेन्नेता पुरुषो महिलाऽपि वा।**
**यादृशश्चापि वृत्तं स्यान्नाट्यकृत्प्रतिभाश्रितम्।।४३।।**

उनमें **प्रकरण** का उदाहरण है राधावल्लभ-प्रणीत तण्डुलप्रस्थीयम्। **भाण** जैसे मेरी ही कृति फण्टूस (प्रत्यूष) चरितभाणः।

व्यायोग, समवकार, डिम, ईहामृग, वीथी तथा अङ्क के उदाहरण गवेषणीय (ही) हैं। व्यभिचरित लक्षणों वाले प्रहसनों की संख्या (अवश्य ही) पुष्कल है। उनमें मुकुन्दराम शास्त्री, नारायणशास्त्री काङ्कर, रमाकान्तशुक्ल, राधावल्लभ, सुन्दरराज, ओगेटि परीक्षित शर्मा, पूजालाल, घनश्यामत्रिवेदी, हरिदत्तशर्मा, रामकृष्णमूर्ति, कृष्णलाल, शिवप्रसादभरद्वाज, रामकिशोरमिश्र तथा वेदकुमारी आदि के प्रहसन महत्त्वपूर्ण हैं।

मेरे द्वारा लिखे गये प्रायः बासठ एकांकियों में अधिकांश तो **प्रहसन कोटि** के ही हैं। जैसे-नवरसप्रहसनम्, स्वप्नाज्जागरणं वरम्, इन्द्रजालम्, मोदकं केन भक्षितम्, वाणीघटकमेलकम्, बधिरप्रहसनम्, साक्षात्कारः, मण्डूकप्रहसनम्, प्रतिभापरीक्षणम्, वादनिर्णयनम्, संवाददातृसम्मेलनम्, प्रत्यक्षरौरवम्, क्रीतानन्दम्, स्वयंवरकेन्द्रम् तथा शारदावमाननम्!

अब **एकाङ्की** का सन्दर्भ-

हिन्दी आदि भारतीय भाषाओं में इस समय **एकाङ्की** नामक जो, सबको प्रिय लगने वाला लघुनाट्य प्रतिष्ठित है।।४०।।

वही, निश्चित रूप से, देववाणी संस्कृत में भी उसी प्रकार प्रतिष्ठित हो चुका है। परन्तु उसे (किसी संस्कृत) उपरूपक के लक्षण से (सर्वात्मना) नियंत्रित नहीं जानना चाहिये।।४१।।

एकांकी में राजा, पण्डित अथवा पामर (ग्राम्य जन) दिव्य अथवा अदिव्य-कोटिक कोई भी पात्र, अन्यान्य शिक्षक, भिक्षुक या संन्यासी।।४२।।

पुरुष अथवा महिला-जो कोई भी हो, नेता हो सकता है। एकांकी का इतिवृत्त भी जिस किसी भी प्रकार का हो सकता है, परन्तु हाँ, उसे नाट्यकार की प्रतिभा से समन्वित होना चाहिये।।४३।।

एकाहचरितञ्चैव लघुनाट्ये प्रयोजयेत्।
संवादबहुला भाषा व्यङ्ग्यगर्भाऽत्र सम्मता।।४४।।

रसः कोऽपि भवेदङ्गी नाट्यवृत्ताऽनुगुण्यतः।
लक्ष्यमेकं परं तस्य भवेद्रङ्गप्रसादनम्।।४५।।

नाट्यशिल्पादिसम्बद्धं वैलक्षण्यं नवं नवम्।
एकाङ्केऽस्मिन्प्रयोक्तव्यं नाट्यकर्त्रा यथामति।।४६।।

एतत्सर्वमप्येकाङ्किवैशिष्ट्यं पूर्वोक्तनाट्यकाराणां लघुनाट्येषु यत्नतोऽन्वेषणीयम्। भूपनायकं यथा मम नवरसप्रहसनम्। शिक्षकनायकं यथा ममैव वाणीघटकमेलकम्। पण्डितनायकं यथा मम मण्डूकपण्डितम्। पामरनायकं यथा ममैवेन्[illegible]म्। महिलानायकं यथा स्वयंवरकेन्द्रं स्वप्नाज्जागरणं वरञ्चेति।

नाटिकाऽपि पूर्वमेव चर्चिता मया। तत्राऽयं विशेषः,

स्त्रीप्राया चतुरङ्का स्यान्नाटिका यदुदाहृता।
पूर्ववर्तिभिराचार्यैस्तन्मह्यमपि रोचते।।४७।।

भूपेतरोऽपि नेता स्यात्पुरुषः किञ्च सम्मता।
दिव्यसद्गुणसम्भारभूषिता कापि भामिनी।।४८।।

अन्यन्निखिलवैशिष्ट्यं दशरूपकवर्णितम्।
नाटिकारचनायान्तु ग्राह्यमेव यथायथम्।।४९।।

सुस्पष्टम्। भूपमहिषीवृत्तविरहिताऽपि नाटिका साम्प्रतिके युगे युज्यत एवेति विशेषः। यथा ममैव प्रमद्वरायां महर्षिपुत्रो रुरुर्नायकः। विद्योत्तमानाटिकायाञ्च कालिदासापरसंज्ञो देवदत्तो नायकः।

विद्युन्माला-पद्मावती-रहस्यमयी-सावित्री-वेलोर्वशी-चाण्डालिका-ऽम्रपाली-कादम्बरीप्रभृतिरचनासु नायकव्यवस्था भिन्नैव दृश्यते।

इस लघुनाट्य में, एक ही दिन में घटी हुई घटना का वर्णन किया जाना चाहिये। भाषा संवाद-बहुल होनी चाहिये। व्यङ्ग्यगर्भा भाषा हो तो फिर क्या कहना??४४??

एकांकी के इतिवृत्त के ही अनुकूल कोई भी रस अंगीरस हो सकता है। परन्तु उस रस का एकमात्र लक्ष्य होना चाहिये-रंग का प्रसादन (न कि दर्शकों का उद्वेग)।।४५।।

नाट्यकार को, अपने बुद्धिवैभव के मुताबिक, इस एकांकी में नाट्यशिल्पादि से सम्बद्ध नया-नया वैलक्षण्य प्रयुक्त करना चाहिये।।४६।।

यह सारा का सारा एकांकि-वैशिष्ट्य पूर्वोद्धृत नाट्यकारों के लघुनाट्यों में यत्नपूर्वक खोजना चाहिये।

**भूपनायक** एकांकी जैसे मेरा नवरसप्रहसनम्। **शिक्षकनायक** एकांकी जैसा मेरा ही वाणीघटकमेलकम्। **पण्डितनायक** जैसे मेरा ही मण्डूकपण्डितम्। **पामरनायक** जैसे मेरा ही इन्द्रजालम्। **महिलानायक** जैसे मेरी ही कृतियाँ स्वयंवरकेन्द्रम् तथा स्वप्राज्जागरणं वरम्।

**नाटिका** की भी चर्चा मैं पहले ही कर चुका हूँ। उस सन्दर्भ में कुछ विशेष वक्तव्य इस प्रकार है-

पूर्वनाट्याचार्यों द्वारा जो यह कहा गया है कि 'नाटिका स्त्रीपात्र-बहुल तथा चतुरंकिका होनी चाहिये, वह मुझे भी (पूर्णतः) अभीष्ट है।।४७।।

(परन्तु) नाटिका का नायक भूपेतर पुरुष भी होना चाहिये। यही नहीं, दिव्य सद्गुणों के सम्भार से विभूषित कोई लोकवन्द्य पुरन्ध्री भी नाटिका का नायक हो सकती है।।४८।।

दशरूपक में वर्णित, नाटिका का अन्य सारा वैशिष्ट्य, आज की नाटिका की रचना में, जैसा का तैसा, ग्रहण करना चाहिये।।४९।।

अभिप्राय सुस्पष्ट है। राजा और रानी की कहानी से विरहित भी नाटिका आज के युग में उचित ही है, यह विशेष आग्रह है। जैसे मेरी ही नाटिका प्रमद्वरा में रुरु नायक है जो महर्षि प्रमति का पुत्र है (किसी राजा का पुत्र नहीं) (मेरी ही) विद्योत्तमानाटिका में भी **कालिदास** अपर संज्ञा वाला देवदत्त नायक है।

विद्युन्माला, पद्मावती, रहस्यमयी, सावित्री, वेला, उर्वशी, चाण्डालिका, आम्रपाली तथा कादम्बरीप्रभृति (नाटिकाकोटिक) रचनाओं में नायक-व्यवस्था भिन्न ही दीखती है।

**अथ श्रव्यकाव्यसन्दर्भः-**

**श्रव्यकाव्यमथेदानीं प्राप्तक्रमं निरूप्यते।**
**गृह्यते हि यदानन्दो रसिकैः श्रुतिसङ्गतः।।५०।।**

पद्यगद्यमयं श्रव्यं मिश्रञ्चेति त्रिधास्थितम्।
पदैर्नियमितं पद्यं गद्यं यद्धि निगद्यते।।५१।।

उभयोर्मिश्रणं मिश्रं गद्यपद्यसमन्वितम्।
प्राक्तनैः कैश्चनाचार्यैश्चम्पूरित्यपि कथ्यते।।५२।।

नियताक्षरमाख्यातं नाट्यशास्त्रकृता पुनः।
पद्यं, गद्यं तथैवेदं घुष्टमनियताक्षरम्।।५३।।

चतुर्भिश्च समैः पादैर्विषमैर्वा नियम्यते।
समवृत्तं क्रमेणेदं विषमञ्च समुच्यते।।५४।।

आदिपादस्तृतीयेन चतुर्थेन द्वितीयकः।
यत्र साम्यं भजेदर्धसमवृत्तं तदुच्यते।।५५।।

अब श्रव्यकाव्य का सन्दर्भ–

अब, दृश्य के बाद श्रव्य का क्रम होने के कारण श्रव्यकाव्य का निरूपण किया जा रहा है जिसका कर्णेन्द्रिय–ग्राह्य आनन्द सहृदयों द्वारा ग्रहण किया जाता है।।५०।।

श्रव्यकाव्य पद्य–गद्यमय तथा मिश्र–तीन प्रकार का होता है। पदों अर्थात् चार चरणों द्वारा नियमित होने के कारण 'पद्य' को पद्य कहते हैं तथा प्रातिभ कथन के कारण 'गद्य' को गद्य कहते हैं।।५१।।

गद्य एवं पद्य से समन्वित दोनो (शैलियों) का मिश्रण मिश्र कहा जाता है। पुराने कुछेक आचार्यों द्वारा वही चम्पू भी कहा जाता है।।५२।।

नाट्यशास्त्रकार (आचार्य भरत) ने तो पद्य को नियताक्षर तथाउसी प्रकार, इस गद्य को अनियताक्षर घोषित किया है।।५३।।

सम (समान रूप वाले)अथवा विषम (असमान रूप वाले) चार चरणों में व्यवस्थित यह पद्य क्रमशः समवृत्त तथा विषमवृत्त कहा जाता है।।५४।।

जब प्रथम चरण तृतीय के समान हो तथा द्वितीय चतुर्थ के तो (उस तीसरे भेद को) अर्ध समवृत्त कहते हैं।।५५।।

रचना बन्धश्शय्येति मिथः पर्यायभूताः। निबध्यते इति बन्धः। सोऽपि द्विविधः–पद्यबन्धो गद्यबन्धश्च। यत्रोभयोः सम्मिश्रणं तत्र मिश्रबन्धः। स एव चम्पूरित्यभिधीयते। पादैश्चतुर्भिर्नियमितत्वात् पद्यम्। न तथेति गद्यम्।

**तमेव बन्धभेदमाचार्यभरतो चूर्णनिबद्धशब्दाभ्यामनियताक्षर-प्रमाण-नियताक्षरशब्दाभ्यां वा बोधयति। तद्यथा-**

**एभिः शब्दविधानैर्विस्तारव्यञ्जनार्थसंयुक्तैः।**
**पदबन्धाः कर्तव्या निबद्धबन्धास्तु चूर्णा वा।।**
**विभक्त्यन्तं पदं ज्ञेयं निबद्धं चूर्णमेव च।**
**तत्र चूर्णपदस्येह संनिबोधत लक्षणम्।।**
**अनिबद्धपदच्छन्दस्तथा चानियताक्षरम्।**
**अर्थापेक्षाक्षरस्यूतं ज्ञेयं चूर्णपदं बुधैः।।**
**निबद्धाक्षरसंयुक्तं यतिच्छेदसमन्वितम्।**
**निबद्धं तु पदं ज्ञेयं प्रमाणनियताक्षरम्।।**-नाट्य० १८

**नियतानि निश्चितानि अक्षराणि यस्मिन् स बन्धो नियताक्षरबन्धः। स्थानदृष्ट्या संख्यादृष्ट्या चेति शेषः। स एव बन्धः पद्यम्। समवृत्त-पद्येऽक्षराणां संख्या प्रतिपादं नियता भवति। लघुत्वगुरुत्वदृष्ट्या तेषां स्थानमपि नियतं भवति। तस्मादेव नियताक्षरमुच्यते पद्यम्। एवं सत्येव प्रवाहलयमाधुर्यश्रुतिसुखादिगुणाः पद्ये समुद्भवन्ति। भरतमतेनेदमेव प्रमाणनियताक्षरमिति। प्रमाणेन च्छन्दश्शास्त्रप्रमाणेन नियतान्यक्षराणि यस्मिंस्तत् प्रमाणनियताक्षरम्। प्रमाणं यथा-ननमयययुतेयं मालिनी भोगिलोकैरिति मालिनीलक्षणम्।**

रचना, बन्ध तथा शय्या-ये सारे शब्द परस्पर पर्यायभूत हैं। जो निबद्ध किया जाय उसे **बन्ध** कहते हैं। वह भी दो प्रकार का होता है-**पद्यबन्ध** तथा **गद्यबन्ध**। जिस बन्ध में दोनों का सम्मिश्रण हो उसे **मिश्रबन्ध** कहते हैं। उसी को चम्पू भी कहा जाता है। चार चरणों द्वारा व्यवस्थित होने के कारण पद्य संज्ञा होती है। जिसमें चरण-व्यवस्था नहीं होती उसे गद्य कहते हैं।

उसी बन्धभेद को आचार्य भरत **चूर्ण** एवं **निबद्ध** पदों द्वारा अथवा **अनियताक्षर** तथा **प्रमाणनियताक्षर** पदों द्वारा बोधित करते हैं। जैसा कि,

विस्तारहेतु व्यञ्जनार्थों से संयुक्त इन शब्दविधानों द्वारा पदबन्धों का निर्माण करना चाहिये-निबद्धबन्धों तथा चूर्णों का।।

विभक्ति से अन्त होने वाला होता है पद! यह दो प्रकार का होता है-निबद्ध (बन्ध) तथा चूर्ण (बन्ध) इनमें (सर्वप्रथम) चूर्णपद का लक्षण समझिये।।

अनिबद्ध पदच्छन्दों वाला, अनिश्चित अक्षर (संख्या) वाला तथा अर्थापेक्षानुसारी अक्षर-विस्तार वाला बन्ध विद्वानों द्वारा **चूर्णपद** कहा जाता है।।

निबद्धाक्षरों से युक्त, यतिच्छेद से समन्वित तथा प्रमाणों (छन्दः शास्त्रीयव्यवस्था) के अनुसार नियत अक्षर-संख्यावाला बन्ध **निबद्धपद** कहा जाता है।-नाट्यशास्त्र अ० १८

नियत हैं, निश्चित हैं अक्षर जिसमें वह बन्ध **नियताक्षरबन्ध** होता है। स्थान की दृष्टि से तथा संख्या की दृष्टि से-ऐसा और कहना चाहिये। वही बन्ध **पद्य** कहा जाता है। समवृत्त पद्य में अक्षरों की संख्या प्रत्येक चरण में नियत (समान) होती है। लघुत्व एवं गुरुत्व की दृष्टि से भी उन अक्षरों का स्थान नियत (ही) होता है। इसीलिये पद्य को नियताक्षर कहा जाता है। ऐसा होने पर ही प्रवाह, लय, माधुर्य तथा श्रुतिसुखादि गुण पद्य में (स्वतः) उत्पन्न हो जाते हैं।

भरत के मत से यही **प्रमाणनियताक्षर** (बन्ध) है। प्रमाण द्वारा अर्थात् छन्दश्शास्त्र के प्रमाण द्वारा नियत हैं अक्षर जिसमें उसे कहते हैं-प्रमाणनियताक्षर। प्रमाण का उदाहरण-नगण, नगण, मगण, यगण तथा यगण से युक्त मालिनी होती है। इस छन्द में यतिच्छेद होता है भोगिसंख्या (भोगी का अर्थ है नाग जिनकी संख्या आठ है) अर्थात् आठवें अक्षर के बाद तथा लोकसंख्या (लोक होते हैं सात) अर्थात् सातवें अक्षर के बाद।

**उदाहरणं यथा मम जानकीजीवने महाकाव्ये-**

**तरुणतरणिदीप्तां नीलवक्रालकान्तां**
**निशितकनकभूषां रक्तकौशेयवेषाम्।**
**त्रिदशयुवतिसौम्यां दिव्यरूपां ददौ तां**
**सपदि जनकजातां राघवायाऽग्निदेवः।।**

**अनिबद्धपदच्छन्दस्त्वमनियताक्षरत्वमर्थापेक्षाक्षरस्यूतत्वञ्चेति त्रयं चूर्णवैशिष्ट्यम्। चूर्णमेव गद्यमिति विशेषः। अभिप्रायापेक्षया स्यूतानि प्रयुक्तान्यक्षराणि यस्मिन् स चूर्णबन्धः। तस्मादेवाऽनियताक्षरत्वमपि तस्य। चूर्णकगद्येऽभिप्रायोऽल्पो भवति। ततोऽक्षराणामपि संख्या तत्राऽल्पीयस्येव। उत्कलिकाप्राये पुनरभिप्रायोऽनल्पस्तस्मादक्षरसंख्याऽप्यनल्पातत्र। एतत्सर्वमग्रे सोदाहरणं निरूपयिष्यते। प्रकृतमनुसरामस्तावत्।**

**।।इति पद्यगद्यवैशिष्ट्यनिरूपणम्।।**

**अथ पद्यविस्तरनिरूपणम्-**

**पद्यं पुनर्द्विधा ख्यातं प्रायशः पूर्वसूरिभिः।**
**मुक्तकादि-प्रबन्धाभ्यां तदिदानीं प्रतन्यते।।५६।।**

**अथ मुक्तकादिकाव्यसन्दर्भः-**

**पूर्वाऽपरसन्दर्भाभ्यां मुक्तं पद्यं तु मुक्तकम्।**
**द्वाभ्यां मिथोऽवसक्ताभ्यां युग्मकं जायते पुनः।।५७।।**

**पद्यत्रयेण सन्दृब्धं सन्दानितकमुच्यते।**
**कलापकं चतुर्भिश्च पञ्चभिः कुलकं मतम्।।५८।।**

उदाहरण जैसे मत्प्रणीत जानकीजीवनम् महाकाव्य का यह पद्य-

तरुण भास्कर के समान प्रकाशमयी, घुँघराले तथा काले अलक प्रान्तों वाली, देदीप्यमान स्वर्णाभूषणालंकृत, लाल रेशमी परिधान में सज्जित, देवाङ्गनाओं के समान कमनीय दिव्यरूप वाली उस जनकनन्दिनी को अग्निदेव ने (स्वयं) तत्काल राघव को अर्पित कर दिया।

अनिबद्धपदच्छन्दस्त्व, अनियताक्षरत्व तथा अर्थापेक्षाक्षरानुस्यूतत्व-ये तीन वैशिष्ट्य हैं **चूर्णपद** बन्ध के। चूर्ण ही गद्य है (आचार्य भरत की दृष्टि में) यह विशेष बात है।

अभिप्राय की अपेक्षा से स्यूत किये गये हों, प्रयुक्त किये गये हों अक्षर (कम या ज्यादा) जिसमें उसे **चूर्णबन्ध** कहते हैं। इसीलिये चूर्ण या गद्य में अनियताक्षरता दीखती है।

(परवर्ती) **चूर्णक** गद्य में अभिप्राय लघु होता है अतएव उसमें अक्षरों की संख्या भी अल्प ही होती है। परन्तु **उत्कलिकाप्राय** गद्य में अभिप्राय अनल्प (विस्तृत) होता है, इसलिये उसमें अक्षरों की संख्या भी अनल्प ही होती है। यह सब आगे सोदाहरण व्याख्यात किया जायेगा। पुनः लौटते हैं मूल सन्दर्भ की ओर!

पद्य-गद्य के वैशिष्ट्य का निरूपण समाप्त हुआ।

अब पद्यबन्ध के विस्तार का निरूपण-

पूर्वाचार्यों द्वारा पद्य को पुनः प्रायः दो रूपों में व्याख्यात किया गया है। पहला-मुक्तक आदि (अर्थात् युग्मक, सन्दानितक, कलापक कुलक, शतकादि)

तथा दूसरा-प्रबन्ध। अब उसका निरूपण किया जा रहा है।।५६।।

सर्वप्रथम मुक्तकादि काव्य का सन्दर्भ-

पूर्व एवं पर (पीछे तथा आगे के) सन्दर्भों से मुक्त पद्य को मुक्तक कहा जाता है। दो पद्यों का सन्दर्भ यदि परस्पर मिला हुआ हो (पृथक् न हो) तो उसे युग्मक कहते हैं।।५७।।

तीन पद्यों का सन्दर्भ परस्पर समन्वित होने पर सन्दानितक कहा जाता है तथा चार और पाँच (पद्यों का सन्दर्भ समन्वित होने पर) क्रमशः कलापक तथा कुलक कहा जाता है।।५८।।

**सप्तकं चाष्टकं ख्यातं दशकं विंशतिस्तथा।**
**पञ्चाशिका शती यद्वा शतकं त्रिशती पुनः।।५९।।**

**ततः पञ्चशती ख्याता ख्याता सप्तशती तथा।**
**सहस्त्रकमपि ख्यातं समवाप्तपरम्परम्।।६०।।**

**तत्र मुक्तक-प्रबन्धाभ्यां पद्यं द्विविधम्। मुक्तं पूर्वापरकथासन्दर्भेण मुक्तं स्वतन्त्रं पद्यं मुक्तकम्। पूर्वापरसन्दर्भैर्ग्रथितं प्रबन्धकाव्यं महाकाव्यादि यथावसरं वक्ष्यते।**

**अभिनवगुप्तपादस्तु मुक्तकं प्रबन्धकाव्यमध्यस्थितमपि स्वीकरोति। तद्यथाऽसावधिलोचनम्-मुक्तमन्येन नालिङ्गितम्। तस्य संज्ञायां कन्। तेन स्वतन्त्रतया परिसमाप्तनिराकाङ्क्षार्थमपि प्रबन्धमध्यवर्ति मुक्तकमित्युच्यते। ध्वन्या० ३।७ टीका।**

**यथा वा भूयोऽप्यसावाह स्पष्टतरम्-यदि वा प्रबन्धेष्वपि मुक्तकस्यास्ति सद्भावः। पूर्वापरनिरपेक्षेणापि हि येन रसचर्वणा क्रियते तदेव मुक्तकम्। यथा-त्वामालिख्य प्रणयकुपिताम् इत्यादिश्लोकः। ध्वन्या० ३।७ टीका।**

**मुक्तकमतितरां प्रशंसति स्वयं ध्वनिकारोऽपि। तद्यथा-मुक्तकेषु हि प्रबन्धेष्विव रसबन्धाभिनिवेशिनः कवयो दृश्यन्ते। यथा ह्यमरुकस्य कवेर्मुक्तकाः शृङ्गाररसस्यन्दिनः प्रबन्धायमानाः प्रसिद्धा एव। ध्वन्या० ३।७ वृत्तिः।**

इसी प्रकार (सन्दर्भ की एकता के आधार पर) सप्तक, अष्टक, दशक, विंशतिका पञ्चाशिका, शती अथवा शतक तथा त्रिशती भी प्रख्यात हैं।।५९।।

इसके बाद पञ्चशती तथा सप्तशती की ख्याति है। सहस्रकम् भी प्रसिद्ध है जिसकी परम्परा (संस्कृत कविता में) प्राप्त होती है।।६०।।

मूलतः तो मुक्तक एवं प्रबन्ध-भेदों से पद्यबन्ध दो प्रकार का होता है। मुक्त अर्थात् पिछले एवं अगले कथा-सन्दर्भ से जो मुक्त हो, स्वतंत्र हो-वह पद्य मुक्त कहा जाता है।

पिछले और अगले सन्दर्भों से ग्रथित (समन्वित) प्रबन्धकाव्य महाकाव्यादि, अवसर आने पर निरूपित किया जायेगा।

अभिनवगुप्तपाद तो मुक्तक (पद्य) को प्रबन्धकाव्य के मध्य में भी स्थित स्वीकार करते हैं। जैसा कि लोचनटीका में उन्होंने कहा है-

मुक्त का अर्थ है दूसरे (पद्य) द्वारा आलिङ्गित न होना। मुक्त पद्य ही मुक्तक है कन् प्रत्यय जुड़ने के कारण। इसलिये, स्वतंत्रतापूर्वक परिसमाप्त होने वाला, निजेतर अर्थ की आकांक्षा न करने वाला (अर्थात् अपने ही अभिप्राय में पर्यवसित) तथा प्रबन्धकाव्य के बीच में (भी) आने वाला मुक्तक कहा जाता है। ध्वन्या० ३।७ की टीका।

जैसा कि उन्होंने आगे पुनः और स्पष्टता के साथ कहा है-प्रबन्धकाव्यों (के बीच) में भी मुक्तक का सद्भाव होता है। पूर्व और पर सन्दर्भों से निरपेक्ष रहते हुए भी जिसके द्वारा रसचर्वणा की जाती है वही है-मुक्तक। जैसे-प्रणयकुपित तुम्हें चित्रित कर इत्यादि (उत्तरमेघ का) पद्य। ध्वन्या० ३।७ की लोचनटीका।

स्वयं ध्वनिकार आनन्दवर्धनाचार्य भी मुक्तक काव्य की अतिशय प्रशंसा करते हैं। उन्हीं के शब्दों में-

मुक्तक काव्यों में भी कविगण, प्रबन्धकाव्यों के ही समान रस-प्रयोगार्थ प्रयत्नशील दीखते हैं। जैसा कि अमरुक कवि के मुक्तक पद्य शृङ्गाररस को प्रवाहित करने वाले, प्रबन्धकाव्य जैसे ही प्रतीत होते हुए ख्यातिप्राप्त हैं। ध्वन्या० ३।७ की वृत्ति।

**युग्मकादिविषयं विशदयत्यभिनवगुप्तः-द्वाभ्यां क्रियासमाप्तौ सन्दानितकम्। त्रिभिर्विशेषकम्। चतुर्भिः कलापकम्। पञ्चप्रभृतिभिः कुलकम्। ध्वन्या० ३।७ टीका।**

**अत्र दृश्यते कश्चिद् विरोधः। सन्दानं तावद्रज्जुः। सा च त्रिभिरेव फालैर्वेष्टिता बलवती भवति। अतएव त्रिभिस्सन्दानितकम् इत्येव युज्यते। यथाह साहित्यदर्पणकारः-**

छन्दोबद्धपरं पद्यं तेन मुक्तेन मुक्तकम्।
द्वाभ्यां तु युग्मकं सन्दानितकं त्रिभिरिष्यते।।
कलापकं चतुर्भिश्च पञ्चभिः कुलकं मतम्।

तत्र मुक्तकं यथा ममैव-

तस्मै दत्तवती कथञ्चन शुभे! सन्देशमद्यैव ते
भूयः किन्तु न यामि तस्य सदनं नीरन्ध्रकुञ्जावृतम्।
मां विद्रावयतेऽवलोक्य तरसा पापी कलापी युवा
पश्यैतानि नखक्षतानि मयका यान्याहृतान्यार्तया।।

युग्मकं यथा ममैव वामनावतरणमहाकाव्ये-

बकुलैः सुमकोरकाञ्चितैः फललुब्धारुणनेत्रसेवितैः।
फलपातसमुत्थवल्लकीमृदुनादभ्रमदक्षनिःस्वनैः।।
जलचारिविहङ्गमव्रजैः शिशुभेकैश्च गृहाङ्गणीकृतम्।
नलिनीतटमैक्षत क्वचिच्चटुवार्तारतहंसमण्डलम्।।

युग्मक आदि के सन्दर्भ की व्याख्या करते हैं अभिनवगुप्त (जो इस प्रकार है।) दो पद्यों द्वारा (समन्वित रूप से) क्रिया की समाप्ति होने पर सन्दानितक (?) होता है। तीन से विशेषक, चार से कलापक तथा पाँच आदि से कुलक होता है। ध्वन्या० ३।७ की लोचनटीका।

यहाँ एक विरोध सा दीखता है। सन्दान का अर्थ है रज्जु अथवा रस्सी। वह रस्सी तीन ही फालों से बटी गई (अधिक) मजबूत होती है (न कि दो से) इसलिये तीन ही पद्यों के समन्वय से सन्दानितक की परिकल्पना उचित प्रतीत होती है। जैसा कि साहित्यदर्पणकार ने कहा है-

छन्दोबद्ध पदों वाला बन्ध पद्य कहा जाता है। यदि वह (पूर्वापर सन्दर्भों से) मुक्त है तो मुक्तक कहा जाता है। दो पद्यों के समन्वय से युग्मक, तीन के समन्वय से सन्दानितक, चार के समन्वय से कलापक तथा पाँच पद्यों के सन्दर्भ-समन्वय से कुलक कहा जाता है।

अब इनमें मुक्तक का उदाहरण जैसे मेरा ही (यह पद्य)

हे शुभे! उस (तुम्हारे प्रणयी) को तुम्हारा सन्देश तो मैने, जैसे-तैसे आज ही पहुँचा दिया परन्तु आगे पुनः, धने झुरमुटों से घिरे, उसके घर की ओर मैं नहीं जाऊँगी। उसका नई उम्र वाला पापी मोर मुझे देखते ही सरपट

दौड़ा लेता है। देखो न, उसके नाखूनों की खरोंच जो विपत्तिग्रस्त होकर मैंने झेले हैं!

युग्मक का उदाहरण जैसे मेरे ही वामनावतरणम् महाकाव्य में-

दानवराज बलि ने (अमरावती में) कहीं पर पुष्करिणी के तट को देखा जो पुष्पकलिकाओं से ओतप्रोत तथा फललोभी कोकिलों द्वारा सेवित बकुल वृक्षों (मौलसिरी) से श्रीमण्डित था तथा (पानी में) फलों के गिरने से उत्पन्न वीणा की मीठी ध्वनि के भ्रमवश चुप्पी साध लेने वाले जलचारी पक्षिसमूहों तथा भेक-शिशुओं द्वारा अपना गृहाङ्गण बनाया जा चुका था और कहीं-कहीं पर चाटुवार्ताओं में डूबे हंसमण्डल से युक्त था।

सन्दानितकं यथा राधावल्लभप्रणीतवसन्तलहर्याम्-

उत्कोचराशिमधिगत्य सुखेन कश्चित् पीत्वा प्रमादमदिरामधिकारमत्तः।
वासन्तिके विहरतीव सदाधिकारी कार्यालयेऽप्यकृतकृत्यकुकृत्यसक्तः।।

यावत्त्वसौ स्फुरति नृत्यति रिङ्गतीव स्फारप्रफुल्लसमदप्रमदासमूहे।
होलोत्सवप्रखरपिञ्जरदिङ्मुखेभ्यः सोल्लासमत्र नगरे स ऋतुर्वसन्तः।।

तावन्मलीमसजुगुप्सितकर्दमानां क्षेपाः शठैश्च विहिता घृणितप्रचारैः।
मर्दैर्विमर्दविकृतैः कृतडम्बरैस्तैः सम्मूर्छिता विषरसेन वसन्तशोभा।।

कलापकं यथा ममैव वामनावतरणे-

विभावसुर्लोकतमोऽपहारकः सनत्कुमारोऽप्यथवा महेश्वरः।
दिदृक्षयाऽयाति मखस्य को न्विति प्रमोहविद्धा दधिरे भृगूत्तमाः।।
विघातशङ्काहतदीनमानसाः प्रयाजका भार्गववंशभास्कराः।
वदन्तु यावत्किल किञ्चिदीहितं बलिः समुत्थाय ससार हर्षितः।।
कमण्डलुं पूर्णजलं सुमेखलां पलाशदण्डं मृगचर्म चासितम्।
मखोपवीतं जटिलां जटामपि मधुस्मितं तं दधतं यथायथम्।।
विलोक्य सौन्दर्यविधानमद्भुतं हृतान्तरालोऽपहृतात्मचेतनः।
विमुग्धचित्तो दितिवंशभास्करो जगाद वाणीं विनतां यशस्विनीम्।।

सन्दानितक का उदाहरण जैसे राधावल्लभ-प्रणीत वसन्तलहरी में (ये पद्य) प्रमादरूपी मदिरा का पान कर अधिकार-मत्त हुआ सा कोई अधिकारी सहजभाव से घूस की धनराशि ऐंठ कर, इस वसन्त वेला में, कार्यालय में धेले भर का भी काम न करता हुआ तथा कुकृत्यों में आसक्त होकर मौज मार रहा है।

अत्यधिक प्रफुल्लित तथा मस्ती में भरी रमणियों की भीड़में चमकता-दमकता, नाचता-कूदता और बलखाता, होलोत्सव में उड़ी अबीर से पिञ्जरित दिशाओं वाला वह वसन्त जब आ धमका उल्लास के साथ इस नगर में।

तभी मैले-कुचैले तथा गन्दे कीचड़ की फेंका-फेंकी शुरू कर दी घृणित उछल-कूद वाले लफंगों ने और विमर्द-विकृत उस भाँगड़ा नाचती भीड़ के कारण मानो वसन्त-लक्ष्मी ही विषरस से मूर्च्छित हो उठी।।

कलापक का उदाहरण जैसे मेरे ही वामनावतरण महाकाव्य में-संसार के अन्धकार का अपहरण करने वाला सूर्य (बालस्वरूप) सनत्कुमार अथवा (साक्षात्) शिव ही-यज्ञ को देखने की इच्छा से आखिर कौन आ रहा है? प्रमोह से बिंधे भृगुवंशी (याजक) ऋषियों ने ऐसा सोचा।

विघ्न-बाधा की आशंका से दीन मनोवृत्ति वाले, यज्ञकर्ता भार्गववंशी ऋषिगण जब तक अपनी आकांक्षा निवेदित करें तब तक (राजा) बलि हर्षित होकर आगे बढ़ा।

पूर्णजल वाले कमण्डलु, सुन्दर मौञ्जी मेखला, पलाशदण्ड, कृष्ण मृगचर्म, यज्ञोपवीत, उलझी हुई जटा तथा मधुर मुस्कान को यथोचित रूप से धारण करने वाले।।

उस अद्भुत सौन्दर्य-विधान को देखकर (बरबस) अपहृत आत्मचेतना वाले तथा वशीकृत चित्तवृत्ति वाले, विमुग्धचित्त दितिवंश-भास्कर बलिने विनम्रताभरी यशस्विनी वाणी प्रकट की।।

अन्यदुदाहरणं यथा ममैव प्रबोधशतके-

त्वन्निर्दयाश्लेषनिमित्तमूर्ध्वप्रोद्यत्करं मां वियतीक्षमाणाः।
कान्तारदेव्यः कथमश्रुबिन्दून् स्थूलाकृतीन् सम्मुमुचुर्दयार्द्राः।।
कथं लिखित्वाधिशिलं प्ररुष्टां त्वां धातुरागैश्चरणार्पितन्ते।
विधातुमैच्छं कथमश्रुपूर्णाऽकुलेक्षणश्चाक्षम एव जातः।।
विलोक्य मेघान्तरितं मृगाङ्कं पूर्णं प्रिये! व्योम्नि विलुप्तधैर्यः।
विलम्बिकेशार्धपरीतवक्त्रं तवाऽस्मरं रामगिरौ कथं वा।।
इतीव तास्ता घटना अनेका वियोगविद्धान्तरसाक्षिभूताः।
सनिर्भराश्लेषमहं प्रवक्ष्ये कान्तेऽधिशय्यं तवकौतुकाय।।

**कुलकं यथा तत्रैव वामनावतरणे-**

**दिव्यं पशुं स विदधेऽक्षतकामधेनुं दिव्यं विहङ्गममसौ कृतवान्सुपर्णम्।**
**दिव्यां धुनीं द्युतटिनीमथ पारिजातं दिव्यं जुघोष मघवा सुरराजवृक्षम्।।**

एक अन्य उदाहरण जैसे मेरे ही **प्रबोधशतक** में-

तुम्हारे निर्दय आश्लेषहेतु ऊपर उठी भुजाओं वाले मुझे आकाश से देखने वाली वनदेवियों ने किस प्रकार स्थूल आकृति वाले अश्रुविन्दुओं को, दयार्द्रभाव से गिराया।

और कैसे रूठी हुई तुम्हें धातुओं के रंग से शिलापट्ट पर चित्रित कर मैने स्वयं को तुम्हारे चरणों पर अर्पित करना चाहा (परन्तु) कैसे अश्रुपूरित अतएव डबडबाई दृष्टि के कारण वैसा नहीं कर सका।

और प्रिये! आकाश में पूर्णचन्द्र को बादलों में छिपा देख कर विलुप्त धैर्य वाला मैं कैसे उस रामगिरि पर लटकती केशराशि से अर्धावगुण्ठित तुम्हारे मुखमण्डल को स्मरण करता रहा।

इस प्रकार, विछोह से बिंधे हृदय की साक्षीभूता उन-उन अनेक घटनाओं को हे प्रिये! मैं तुम्हें शय्या पर प्रगाढ आलिङ्गन में बाँध कर ही, तुम्हारे कौतुकार्थ सुनाऊँगा।

**कुलक** का उदाहरण जैसे वहीं, वामनावतरण महाकाव्य में-

अक्षत कामधेनु को देवराज इन्द्र ने दिव्यपशु का गौरव प्रदान किया तथा सुपर्ण (गरुड) को दिव्य विहंगम घोषित किया। देव नदी गंगा को दिव्य धुनी तथा पारिजात को दिव्य सुरराजवृक्ष के रूप में प्रतिष्ठित किया।।

**दिव्यां लतां स वृतवानथ सोमवल्लीं पेयञ्च सोमरसमध्वरमन्त्रपूतम्।**
**भक्ष्यं हविष्यममलञ्च पुरोडशाख्यं दिव्यं क्रतुं विबुधसम्मतसोमयागम्।।**
**दिव्यं पयोधिमवृणोत्किल दुग्धसिन्धुं दिव्याचलं स विदधे प्रथितं सुमेरुम्।**
**दिव्यायुधं कुलिशमस्थिकृतं दधीचेर्दिव्यञ्च मासमकरोत्पुरुषोत्तमाख्यम्।।**
**ऐरावतं विबुधसिन्धुरमश्वरत्नमुच्चैःश्रवोऽभिधमसौ ववृते सुखाय।**
**दिव्यं मणिं स हरिवक्षसि कौस्तुभाख्यं दिव्यं सरश्च मघवाऽकृत मानसाख्यम्।।**
**कृत्वा हिमाचलमसौ विबुधाधिवासं स्वर्गाधिरोहणपथं द्युनदीञ्च गङ्गाम्।**
**सोपानवीथिमनघां दिवि सारयन्तीं स्वर्गं भुवञ्च मघवा युगपद् बबन्ध।।**

सप्तकाऽष्टकदशकविंशतिकाप्रभृतीनि यथा मदुपज्ञे कस्मै देवाय

**हविषा विधेमेति कोशकाव्ये। पञ्चाशिका यथा मण्युपाह्वजनार्दन-प्रसादपाण्डेय-विरचितोद्गारपञ्चाशिका। शती यथा छन्दश्शती जनार्दन-पाण्डेयस्यैव। शतकं यथा ममैव मृगमृगेन्द्रान्योक्तिशतकम् शतकान्तराणिच पञ्चविंशतिमितानि। त्रिशती यथा शिवजीवोपाध्यायप्रणीता शतकत्रयनाम्नी। पञ्चशती यथा मदुपज्ञा पञ्चकुल्या। सप्तशती यथा राधासप्तशती रसिकविहारिजोशिनः, स्फूर्तिसप्तशती शिवदत्तशर्मचतुर्वेदिनः। सहस्त्रकं यथा ममैवाभिराजसहस्त्रकम् जगन्नाथपाठक-प्रणीतमार्यासहस्त्रारामम्।**

सोमवल्ली को दिव्यलता के रूप में वरण किया और यज्ञ-मंत्रों से पवित्रित सोमरस को **दिव्यपेय** बनाया। **दिव्यभक्ष्य** बनाया हविष्यान्न के रूप में प्रयुक्त निर्मल पुरोडाश को तथा **दिव्ययज्ञ** घोषित किया देवसम्मत सोमयाग को।।

क्षीरसागर को **दिव्यसमुद्र** घोषित किया और प्रख्यात सुमेरु को **दिव्यपर्वत** की प्रतिष्ठा दी। महर्षि दधीचि की अस्थियों से निर्मित कुलिश (वज्र) को **दिव्यायुध** घोषित किया तथा पुरुषोत्तममास को **दिव्यमास** के रूप में प्रतिष्ठित किया।

ऐरावत को **दिव्यगज**, उच्चैः श्रवा को **दिव्यअश्व** के रूप में उन देवराज इन्द्र ने सुखहेतु वरण किया। नारायण के वक्षः स्थल पर विराजमान कौस्तुभ को इन्द्र ने **दिव्यमणि** तथा मानसरोवर को **दिव्य सरोवर** घोषित किया।

(इसी प्रकार) देवताओं के निवासभूत हिमालय पर्वत को स्वर्गारोहण का मार्ग तथा देवनदी गंगा को, स्वर्ग की ओर प्रस्थान करती निष्पाप सोपान-वीथी (सीढ़ी) बनाते हुए मधवा (इन्द्र) ने स्वर्ग और पृथ्वी को एक साथ जोड़ दिया।।

सप्तक, अष्टक, दशक तथा विंशतिका आदि का उदाहरण मेरे द्वारा प्रणीत कोशकाव्य **कस्मैदेवाय हविषा विधेम** में उपलब्ध है।

पञ्चाशिका का उदाहरण जैसे जनार्दनप्रसाद पाण्डेय मणि-प्रणीत **उद्गार-पञ्चाशिका**। शती का उदाहरण भी जनार्दनपाण्डेय की ही कृति-**छन्दश्शती** है।

शतक का उदाहरण जैसे मेरी ही रचना-**मृगमृगेन्द्रान्योक्तिशतकम्**। इसी प्रकार मेरे अन्यान्य पच्चीस शतक भी शतक के उदाहरण हैं।

त्रिशती का उदाहरण जैसे शिवजीवोपाध्याय-प्रणीत **शतकत्रयम्**।

पञ्चशती का उदाहरण मेरी रचना-**पञ्चकुल्या**।

सप्तशती का उदाहरण रसिकविहारी जोशी की कृति **राधासप्तशती** तथा शिवदत्तशर्मा चतुर्वेदि-प्रणीत **स्फूर्तिसप्तशती**।

सहस्रक का उदाहरण जैसे मेरी ही काव्यकृति अभिराजसहस्रकम्, जगन्नाथपाठक-प्रणीत आर्यासहस्रारामम्।

अथ प्रबन्धकाव्यसन्दर्भः-

पद्यान्तरनिरपेक्षं यथा भवति मुक्तकम्।
पूर्वाऽपरकथापेक्षं प्रबन्धं प्रोच्यते तथा।।६१।।

प्रबन्धकाव्यमेतद्धि नायकाद्यन्तजीवनम्।
वर्णयेच्चेन्महाकाव्यं सर्गबद्धं समुच्यते।।६२।।

कस्यचित्पुरुषार्थस्य साङ्गोपाङ्गसमीक्षणम्।
तच्चाप्यस्ति महाकाव्यमित्येके बुधतल्लजाः।।६३।।

वर्ण्यते किन्तु चेन्नेतुर्जीवनांशो हि केवलम्।
खण्डकाव्यं भवेन्नूनं तदसर्गं लघुक्रमम्।।६४।।

पुरुषार्थविशेषस्याप्यांशिकं यद्धि वर्णनम् ।
नेतुस्तु कस्यचिन्नूनं खण्डकाव्यं तदुच्यते।।६५।।

अथ महाकाव्यलक्षणम्-

सर्गबन्धो महाकाव्यं लोकवन्द्यजनाश्रयम्।
ख्यापयद्विश्वबन्धुत्वं स्थापयद्विश्वमङ्गलम्।।६६।।

नायकस्तत्र देवः स्यात्प्रजाबन्धुरथो नृपः।
चारुचर्योऽथवा कोऽपि सज्जनश्चरितोज्ज्वलः।।६७।।

प्रातस्सन्ध्यानिशीथेन्दुभास्करोदयतारकाः।
वनोद्यानन‍दीसिन्धुप्रपाताद्रिबलाहकाः।।६८।।

ग्रामाश्रमपुराऽरामदुर्गसैन्यरणोद्यमाः।
पुत्रजन्मादिवृत्तान्ताः पामरावाससङ्कथा।।६९।।

इतिवृत्तानुरोधात्तु वर्णनीया न चाऽन्यथा।
प्रसह्य वर्णने तेषां न च तृप्तिर्न वा यशः।।७०।।

अब प्रबन्धकाव्य का सन्दर्भ-

जैसे मुक्तक पद्य (पूर्व एवं पर) पद्यान्तर से निरपेक्ष होता है उसी प्रकार प्रबन्धकाव्य होता है पूर्व एवं परकथा का अपेक्षी।।६१।।

यह प्रबन्धकाव्य यदि (किसी) नायक के जीवन का आद्यन्त वर्णन करता है तो सर्गों में विभक्त उसे महाकाव्य कहते हैं।।६२।।

यदि किसी पुरुषार्थ-विशेष की सांगोपांग समीक्षा की जाय तो भी उसे महाकाव्य कहते हैं, ऐसा कुछेक श्रेष्ठ विद्वानों का मन्तव्य है।।६३।।

परन्तु यदि किसी नायक के (सम्पूर्ण) जीवन का अंशमात्र वर्णित किया जाय तो निश्चय ही सर्गविहीन तथा लघु-कलेवर वह रचना खण्डकाव्य होती है।।६४।।

नायक के जीवन का पुरुषार्थ-विशेष भी (अर्थ, धर्म एवं काम) यदि अंशतः वर्णित किया जाय तो भी वह रचना खण्डकाव्य होती है।।६५।।

महाकाव्य का लक्षण-

लोकवन्द्य नायक पर आश्रित, विश्वबन्धुत्व को प्रख्यापित करने वाला तथा विश्वमंगल की स्थापना करने वाला सर्गबन्ध (प्रबन्ध काव्य) महाकाव्य होता है।।६६।।

उस महाकाव्य में नायक (कोई) देवता हो, प्रजावत्सल नरपति हो अथवा समुज्ज्वल चरित वाला तथा सौम्य आचरण वाला कोई सत्पुरुष।।६७।।

प्रातः, सन्ध्या, अर्धरात्रि, चन्द्रोदय, सूर्योदय, नक्षत्रोदय, वन, उद्यान, नदी, सागर, प्रपात, पर्वत, मेघ।।६८।।

गाँव-गिराँव, आश्रम, नगर, आराम, दुर्ग, सैन्य, रणप्रयाण तथा पुत्रजन्मादि के वृत्तान्त एवं झुग्गी-झोपड़ियों की आपबीती।।६९।।

(महाकाव्य के) इतिवृत्त के अनुरोध को दृष्टि में रख कर ही वर्णित करना चाहिये, किसी अन्यरूप (पूर्वाग्रहवश) में नहीं। उनका जबर्दस्ती (अस्वाभाविक) वर्णन करने से न तो (पाठकों को) तृप्ति होगी और नहीं (रचनाकार कवि को) यश प्राप्त होगा।।७०।।

यच्छिवं यच्च सत्यं स्यादथवा लोकमङ्गलम्।
वर्णनीयं प्रकल्प्यापि कथांशीकृत्य सादरम्।।७१।।
सर्गा अष्टाधिकाः सन्तु कथाविस्तृतिसम्मताः।
अष्टत्रिगुणतां यावत्सर्गसंख्या प्रथीयसी।।७२।।
नोद्वेगः कविना कार्यः पाठकानां रसात्मनाम्।
सर्गसंख्यादिविस्तारैर्वर्णनैर्वाऽनपेक्षितैः।।७३।।

लोकवृत्तं न हातव्यं मूलवृत्तोपकारकम्।
लोकचित्रणगर्भं हि महाकाव्यं महीयते।।७४।।

त्रयाणां पुरुषार्थानां कश्चिदेको भवेद्ध्रुवम्।
महाकाव्यफलं रम्यं धर्मकामार्थसम्मतम्।।७५।।

शृङ्गारवीरशान्तानां कश्चिदन्यतमो रसः।
सयत्नमङ्गीकर्तव्यः कविना प्रतिभावता।।७६।।

छन्दोऽलङ्कारसन्दर्भा भूरिवैविध्यमण्डिताः।
महाकाव्ये प्रयोक्तव्या भावुकानां प्रतुष्टये।।७७।।

लोकोत्तरगुणादर्शः पुरुषो नायको भवेत्।
महीयसी पुरन्ध्री वा नाऽत्र कार्या विचारणा।।७८।।

जो (लोक के लिये) कल्याणकारी हो, जो सत्य हो अथवा लोकमंगलकर हो ऐसी घटनाओं को, चाहे कल्पना ही क्यों न करनी पड़े, मूलकथा का अंश बना कर, आदरपूर्वक वर्णित करना चाहिये।।७१।।

सर्ग आठ से अधिक हों (परन्तु) कथा-विस्तार के सानुपातिक हों। (मेरी दृष्टि में) आठ का तिगुना अर्थात् चौबीस तक सर्गसंख्या उचित मानी जायेगी (इससे अधिक नहीं)।।७२।।

रसानुभूति के लिये उत्कण्ठित पाठकों का, कवियों द्वारा सर्गसंख्यादि के (अनपेक्षित) विस्तार तथा अप्रासंगिक वर्णनों द्वारा, उद्वेग नहीं किया जाना चाहिये।।७३।।

मूल कथा का उपकार करने वाले लोकवृत्तों का परित्याग नहीं करना चाहिये (वस्तुतः) लोकचित्रण से भरे-पुरे महाकाव्य ही प्रशंसनीय होते हैं।।७४।।

धर्म, अर्थ, काम-इन तीन पुरुषार्थों में से कोई एक निश्चित रूप से महाकाव्य का रमणीय फल (लक्ष्य) होना चाहिये।।७५।।

प्रतिभाशाली कवि द्वारा शृङ्गार, वीर एवं शान्त में से किसी एक को (महाकाव्य का) अंगी रस यत्नपूर्वक प्रतिष्ठित करना चाहिये।।७६।।

प्रभूत विविधता से श्रीमण्डित छन्दों एवं अलंकारों के सन्दर्भ, पाठकों की हार्दिक तुष्टि के लिये (कवियों द्वारा) महाकाव्य में प्रयुक्त किये जाने चाहिये।।७७।।

लोकोत्तर गुणों एवं (उच्च) आदर्शों वाला कोई पुरुष नायक होना चाहिये

या फिर कोई महीयसी महिला! इस सन्दर्भ में (स्त्री-पुरुष होने का) विचार नहीं करना चाहिये।।७८।।

कथावैशिष्ट्यमालक्ष्य समज्ञां नायकस्य वा।
करणीयं महाकाव्यस्याभिधानं यशस्करम्।।७९।।
प्रतिष्ठापयितुं नूत्नं महाकाव्ये स्वयं कविः।
आचार्यप्रतिभो नूनं यदि वा भवति क्षमः।।८०।।

लोकवन्द्यजनाश्रयं महाकाव्यं यथा झाँसीश्वरीतिलकगान्धिवल्लभ-सुभाष-जवाहरविवेकानन्दटॉलसटायलेनिनदयानन्देन्दिराराजीवादिसमाश्रितं महाकाव्यजातम्।

विश्वमङ्गलाश्रयं महाकाव्यं यथा माधवभट्टराइप्रणीतं सत्यसाईचरितम्, बलभद्रप्रसादशास्त्रिप्रणीतं भागीरथीदर्शनम्, दूताञ्जनेयम्, मल्लिकार्जुन-परड्डिविरचितं वसवभास्करोदयम्, रेवाप्रसादद्विवेदिप्रणीतमुत्तरसीताचरितम्, अभिराजराजेन्द्रविरचितं जानकीजीवनम् वामनावतरणञ्च, वसन्तत्र्यम्ब-कशेवडे-प्रणीतं शुम्भवधम्, विष्णुदत्तशर्मप्रणीतं गुरुनानकदेवचरितम्, रामभद्राचार्यप्रणीतं भार्गवराघवीयम्, कृष्णप्रसादघिमिरेप्रणीतं श्रीकृष्ण-चरितामृतम्, क्षमारावविरचितं ज्ञानेश्वरचरितम्, तुकारामचरितञ्चेत्येवमादीनि।

अष्टसर्गात्मकं महाकाव्यं यथा श्रीनिवासरथप्रणीतं बलदेवचरितम्, चतुर्विंशतिसर्गात्मकं च स्वातन्त्र्यसम्भवं सनातनकवेः। सर्गसंख्याविस्तारो यथापरीक्षिच्छर्मप्रणीते श्रीमत्प्रतापराणायने यत्राऽशीतिमिताः सर्गा विद्यन्ते।

लोकवृत्तं यथा मदुपज्ञे जानकीजीवने सीताशैशववर्णनं, प्राजापत्य-विधिना सीतारामविवाहवर्णनं साकेतान्तः पुरे होलोत्सववर्णनम्।

महिलानायकं महाकाव्यं यथा विष्णुदत्तशुक्लस्य सौलोचनीयम्, उर्मिलीयम् श्रीनारायणशुक्लस्य, सावित्रीचरितमात्मारामशास्त्रिणः, झाँसीश्वरीचरितं सुबोध-चन्द्रपन्तस्य, यशोधरामहाकाव्यम् ओगेटिपरीक्षिच्छर्मणः, सीताचरितं रेवा-प्रसादद्विवेदिनः, राधाचरितम् कालिकाप्रसादशुक्लस्य, जानकीजीवनं ममैवाऽभिराजराजेन्द्रस्य, इन्दिराजीवनं बलभद्रशास्त्रिणः, जगदम्बिकावैभवम् भीमकान्तपन्थिनः।

(महाकाव्य की) कथा की विशेषता को दृष्टि में रखकर अथवा नायक की कीर्ति को महत्त्व देते हुए महाकाव्य का यशस्कर नाम रखना चाहिये।।७९।।

अथवा आचार्य-सरीखी प्रतिभा वाला कवि, निश्चित रूप से स्वयमेव (अपने महाकाव्य में) कुछ भी अभिनव (विलक्षण) प्रतिष्ठित करने में समर्थ होता है।।८०।।

**लोकवन्द्यजनाश्रय** महाकाव्य जैसे झाँसीश्वरी, तिलक, गान्धी, वल्लभ, सुभाष, जवाहर, विवेकानन्द, टॉल्सटॉय, लेनिन, दयानन्द, इन्दिरा तथा राजीव आदि पर आश्रित महाकाव्य-समूह।

**विश्वमंगलाश्रय** महाकाव्य जैसे माधवभट्टराई-प्रणीत सत्यसाईचरितम्, बलभद्रप्रसादशास्त्रि-प्रणीत भागीरथीदर्शनम् तथा दूताञ्जनेयम्, मल्लिकार्जुन परडिड्-प्रणीत बसवभास्करोदयम्, रेवाप्रसादद्विवेदि-प्रणीत उत्तरसीताचरितम्, अभिराजराजेन्द्र-प्रणीत जानकीजीवनम् तथा वामनावतरणम्, वसन्तत्र्यम्बक शेवडे-प्रणीत शुम्भवधम्, विष्णुदत्तशर्म-प्रणीत गुरुनानकदेवचरितम्, रामभद्राचार्यप्रणीत भार्गवराघवीयम्, कृष्णप्रसादधिमिरे-प्रणीत श्रीकृष्णचरितामृतम्, क्षमाराव-प्रणीत ज्ञानेश्वरचरितम् तथा तुकारामचरितम्। इत्यादि।

**अष्टसर्गात्मक** महाकाव्य जैसे श्रीनिवासरथ-प्रणीत बलदेवचरितम्, चौबीससर्गात्मक सनातनकवि का स्वातन्त्र्यसम्भवम्। सर्गसंख्या का विस्तार जैसे परीक्षित् शर्म-प्रणीत श्रीमत्प्रतापराणायनम् जिसमें कुल अस्सी सर्ग हैं।

**लोकवृत्त** जैसे मेरे ही महाकाव्य जानकीजीवनम् में सीता का शैशववर्णन, प्राजापत्य-विधि से सीता और राम का विवाह-वर्णन तथा साकेत के अन्तःपुर में होलिकोत्सव का वर्णन!

**महिला-नायक** वाले महाकाव्य जैसे विष्णुदत्तशर्म-कृत सौलोचनीयम्, आत्मारामशास्त्रि-प्रणीत सावित्रीचरितम्, श्रीनारायणशुक्ल का उर्मिलीयम्, ओगेटिपरीक्षित् शर्म का यशोधराचरितम्, सुबोधचन्द्रपन्तकृत झाँसीश्वरीचरितम्, कालिकाप्रसादशुक्ल-कृत राधाचरितम् रेवाप्रसादद्विवेदि-प्रणीत उत्तरसीताचरितम्, अभिराजराजेन्द्र-प्रणीत (मेरा ही) जानकीजीवनम्, बलभद्रशास्त्रि-प्रणीत इन्दिराजीवनम्, भीमकान्तपंथी-प्रणीत जगदम्बिकावैभवम्।

**यच्च राधावल्लभत्रिपाठिना भाषार्थचमत्कृति-कविदृष्टि-बन्ध-रीतीन्द्रियाणि आधृत्य काव्यविधाविभाजनम् ( अभिनव० ३।१।२ ) इति ब्रुवता काव्यभेदनिरूपणं कृतं तत्पूर्वकाव्यशास्त्रपरम्परापरीहारवशात् पाठकान् द्वैधग्रस्तान् कुर्यादिति चिन्त्यम्। कोविदानाम्पुनः प्रीतिकरमेव।**

**यच्च तेन महाकाव्यं परिभाषितम्-पद्यात्मकं समग्रजीवननिरूपणपरं**

महाकाव्यम्। गीतैतिह्यपुराणलोककथाभेदादस्य नानात्वम् इति ( अभिनव० ३।१।३ ) तदपि सहृदयपाठकापेक्षाऽपूरणपरमेव प्रतीयते। सिद्धान्ता नात्मतोषायाऽपितु सहृदयपरितोषाय स्युरिति दिक्।

यच्च द्विवेदिरहसविहारिणोदितम् -

सर्गैर्वृत्तैश्च बद्धं सहृदयहृदयाह्लादिशब्दार्थरम्यं
संवादैश्चोच्चशिल्पैः सततरसमयं ग्रन्थिमुक्तं समृद्धम्।
पात्रं स्याद्यस्य मुख्यं परमगुणयुतं लोकविख्यातवृत्तं
भव्यं लोकस्वभावं महदपि महतां तन्महाकाव्यमास्ते।।

तत्सर्वं ग्राह्यमेव महाकाव्यवैशिष्ट्यप्रकाशनक्षमत्वात्।

और जो राधावल्लभ त्रिपाठी ने–भाषाचमत्कृति, कविदृष्टि, बन्ध, रीति, इन्द्रिय को आधार मानकर काव्यविधा का विभाजन सम्भव है– ऐसा कहते हुए काव्य–भेदों का निरूपण किया है, वह पूर्व काव्यशास्त्रीय परम्पराओं की उपेक्षा करने के कारण पाठकों को संशयग्रस्त बना सकताहै, अतएव चिन्त्य है। हाँ, विद्वज्जनों के लिये भले ही प्रीतिकर हो।

और जो उन्होंने महाकाव्य को परिभाषित किया है–समग्रजीवन का निरूपण करने वाला पद्यबन्ध महाकाव्य है। गीत, ऐतिह्य, पुराण तथा लोककथा की दृष्टि से उसका वैविध्य संभव है (अभि० ३।१।३) वह लक्षण भी सहृदय पाठकों की (महाकाव्य का सांगोपांग लक्षण जानने की) अपेक्षा को अपूर्ण करने वाला ही प्रतीत होता है।

सिद्धान्त (मात्र) अपनी सन्तुष्टि के लिये नहीं, प्रत्युत सहृदयों के परितोषार्थ होने चाहिये। इतना ही पर्याप्त है।

और जो रहसविहारी द्विवेदी ने कहा–सर्गों एवं वृत्तों में निबद्ध, सहृदय–हृदयाह्लादी शब्दार्थ–समष्टि से रमणीय, संवादों एवं उत्कृष्ट शिल्पों से निरन्तर रसमय, ग्रन्थिमुक्त, समृद्ध, लोकविख्यात कथानक वाला, चरित्रचित्रण की प्रधानता से युक्त, परमगुणयुक्त, भव्य लोकस्वभाव का प्रदर्शक, श्रेष्ठों में भी श्रेष्ठ जो हो, उसे महाकाव्य कहते हैं।

यह सब ग्राह्य है महाकाव्य का वैशिष्ट्य बता सकने के कारण!

अथ खण्डकाव्यादिलक्षणम्–

कस्यचित्पुरुषार्थस्य वर्णनन्तु यदांशिकम्।
जीवनस्याथवा नेतुः खण्डकाव्यं तदुच्यते।।८१।।

खण्डकाव्यमिदञ्चैव स्वेतिवृत्तानुरोधतः।
विविधान्यभिधानानि पृथगर्थानि गच्छति।।८२।।

दूतकाव्यमिदं प्रोक्तं दौत्यकर्मप्रसङ्गतः।
सन्देशप्रेषणव्याजैरस्य सन्देशकाव्यता।।८३।।

मेघो दूतीकृतो यस्मान्मेघदूतं ततो न्विदम्।
अन्यच्च हंससंदेशस्तत्र तस्यैव चित्रणात्।।८४।।

अन्यापदेशकाव्यं तत्प्रवृत्त्याऽन्योक्तिनिष्ठया।
गीतिकाव्यं तदेवोक्तं गीततत्त्वप्रयोगतः।।८५।।

देवस्तुतिप्रवृत्त्या च स्तोत्रकाव्यं तदुच्यते।
पद्यानां शतसंख्यत्वाच्छतकाख्यं तदेव हि।।८६।।

सम्पादनाच्च नीतीनां नीतिकाव्यं नु तत्पुनः।
ख्यातं प्रहेलिकाकाव्यं तासामेव निरूपणात्।।८७।।

विमानयात्रानुभवैः समृद्धमधुनातनम्।
विमानकाव्यमित्याख्यं साम्प्रतं हि महीयते।।८८।।

यात्राकाव्यं नर्मकाव्यं रागकाव्यं तथैव च।
एवमेवाऽभिधाऽप्यन्या तत्तद् वृत्त्यनुरोधतः।।८९।।

लहरीकाव्यमप्येतत् खण्डकाव्यं समुच्यते।
प्रतिपाद्यं यदा काव्ये लहरीसन्निभं भवेत्।।९०।।

खण्डकाव्यादि का लक्षण–

किसी पुरुषार्थ (धर्म, अर्थ अथवा काम) का जो आंशिक (अ-सांगोपांग) वर्णन होता है अथवा नायक के (आद्यन्त) जीवन का जो खण्डवर्णन होता है, उसे खण्डकाव्य करते हैं।।८१।।

यही खण्डकाव्य अपने इतिवृत्त के अनुरोधवश, पृथक् अर्थ वाले विविध नामों (संज्ञाओं) को धारण करता है।।८२।।

दौत्यकर्म का प्रसंग (वार्णित) होने पर इसे दूतकाव्य कहा जाता है। यूँ ही सन्देश-सम्प्रेषण के महत्त्ववश इसे सन्देशकाव्य भी कहते हैं।।८३।।

चूँकि (कालिदास-प्रणीत काव्यविशेष में) मेघ को दूत बनाया गया इसलिये इसे मेघदूत नाम दिया गया। एक दूसरे काव्य को हंससन्देश कहा गया उसमें हंस (के ही दौत्यकर्म) का वर्णन होने के कारण।।८४।।

खण्डकाव्य की प्रवृत्ति अन्योक्ति वर्णन-निष्ठ होने के कारण उसे अन्यापदेशकाव्य (अन्योक्ति काव्य) कहते हैं। उसी को गीतकाव्य भी कहते हैं गीततत्त्व का प्रयोग होने के कारण।।८५।।

खण्डकाव्य में देवस्तुति की प्रवृत्ति (वर्णना) होने से उसे स्तोत्रकाव्य कहा जाता है और (खण्डकाव्य में) पद्यों की संख्या सौ होने के कारण उसी को शतककाव्य भी कहते हैं।।८६।।

नीतियों के सम्पादन के कारण उसे नीतिकाव्य कहते हैं और उसी को प्रहेलिकाकाव्य भी कहते हैं (उस खण्डकाव्य में) पहेलियों का वर्णन होने के कारण।।८७।।

विमान-यात्राओं के अनुभव से भरे-पुरे आजकल के काव्यविशेष को विमानकाव्य के रूप में प्रतिष्ठित माना गया है।।८८।।

नाना प्रकार के इतिवृत्तों के अनुरोधवश, इसी प्रकार खण्डकाव्य की अन्यान्य संज्ञायें भी होती हैं जैसे-यात्राकाव्य, नर्मकाव्य तथा रागकाव्य आदि।।८९।।

यही खण्डकाव्य लहरीकाव्य भी कहा जाता है बशर्ते उस काव्य का प्रतिपाद्य लहरी के समान हो।।९०।।

परस्परं समासक्ता लहर्यो जलधौ यथा।
भङ्गिव्रजं जनयन्त्यो यान्त्यद्वैतस्वरूपताम्।।९१।।

भक्तिशृङ्गारसन्दर्भाः काव्येऽन्येऽपि तथा यदा।
भिन्नाः सन्तोऽपि पुष्णन्ति मूलभावं पुनः पुनः।।९२।।

लहरीसन्निभा भाषाविच्छितिं जनयन्ति च।
नयनाऽऽसेचनं भूरि वितन्वन्ति निरन्तरम्।।९३।।

तदा तल्लहरीकाव्यं कोविदैर्विनिगद्यते।
अभिराजमतञ्चैतन्निश्चितं बुधतोषणम्।।९४।।

दूतकाव्यं यथा ममैव मृगाङ्कदूतम्। यथा वा रामचन्द्रअम्बिकादत्त-शाण्डिल्यप्रणीतं कामदूतम् कृपारामत्रिपाठिनस्तरङ्गदूतम् हरिनारायणदीक्षितस्य हनुमद्दूतम्, पी०के० नारायणपिल्लैप्रणीतं मयूरदूतम्, इच्छारामद्विवेदिप्रणीतं मित्रदूतम्।

सन्देशकाव्यं यथा कुटुम्बरामशास्त्रिण इन्दुसन्देशः, कुञ्चननम्बूदरी-

प्रणीतश्चातकसन्देशः, वेलूरिसुब्बारावशर्मप्रणीतः सुन्दरीमेघसन्देशः लक्ष्मणसूरिप्रणीतः विप्रसन्देश इति।

अन्यापदेशकाव्यं यथा ममैवार्यान्योक्तिशतकम्, मृगमृगेन्द्रान्योक्तिशतकञ्च। यथा वा बदरीनाथशर्मप्रणीताऽन्योक्तिसाहस्री।

गीतिकाव्यं यथा ममैव गीतभारतम्। यथा वा राधावल्लभप्रणीतं गीतधीवरम्, भट्टमथुरानाथशास्त्रिप्रणीता गीतिवाणी, पुल्लेलरामचन्द्रप्रणीतो गीताञ्जलिः, अमीरचन्दशास्त्रिप्रणीता गीतिकादम्बरी, रुद्रदेवत्रिपाठिकृता गीतिगङ्गा, विरूरचिदम्बरजोइसकृतं गीतरामायणम्, एस०वी०-वेलणकरकृतं गीतिगैर्वाणम्, नृपतिरामभट्टकृतं गीतगिरीशम्, वीरेन्द्रकुमार-भट्टाचार्यकृतं गीतगौराङ्गम्, श्रीधरभास्करवर्णेकरकृता संस्कृतगीतमालेति। हरिदत्तशर्मकृता गीतकन्दलिका, मयाऽभिराजराजेन्द्रेण प्रणीता वाग्वधूटी-मृद्वीका-श्रुतिम्भरा-मत्तवारणी-शालभञ्जिकाः, पुष्पादीक्षितकृता-ऽग्निशिखा, हरेकृष्णमेहेरकृतो मातृगीतिकाञ्जलिः, जनार्दनमणिप्रणीता निस्यन्दिनी च।

स्तोत्रकाव्यं यथा मम पराम्बाशतकम् नवाष्टकमालिका शनिशतकं चेति। यथा वा कृष्णदत्तशास्त्रिकृतं रामराघवस्तवनम्, जयनारायणयात्रिकृतं सवितृस्तोत्रम्, रामभद्राचार्यप्रणीतं लघुरघुवरम्, रामचन्द्रअम्बिकादत्तप्रणीता स्तोत्रावलिः, नारायणवेङ्कटरमणकृतः स्तुतिकुसुमाञ्जलिः, स्वामिनाथप्रणीतं बदरीशसुप्रभातम्, पूजालालकृता स्तोत्रसङ्गीतिकेति।

शतकानां संख्या भूयसी। सविस्तरमस्मदुपज्ञे विंशशताब्दीसंस्कृत-ग्रन्थसूचीपत्रे द्रष्टव्यम्। प्रहेलिकाकाव्यं यथा रामाशीषपाण्डेयकृतं प्रहेलिकाशतकम्।

जैसे सागर में लहरियाँ एक दूसरे के साथ जुड़ी रहती हैं तथा नाना प्रकार की भंगियों को उत्पन्न करती परस्पर अभिन्न प्रतीत होती हैं।।९१।।

उसी प्रकार काव्य में भी जब भक्ति एवं शृङ्गार के सन्दर्भ अथवा अन्यान्य भी प्रवृत्तियाँ, परस्पर भिन्न होती हुई भी, मूलभाव (central theme) को पौनःपुन्येन सम्पुष्ट करती हैं।।९२।।

लहरियों के समान तथा भाषा-सौन्दर्य की सृष्टि करती हैं तथा क्षण-प्रतिक्षण नयनासेचनक को विखेरती रहती हैं।।९३।।

तो उसी को विद्वज्जन **लहरीकाव्य** कहते हैं। पण्डितों को परितुष्ट करने वाला यही अभिराज का भी सुनिश्चित मत है।।९४।।

**दूतकाव्य** जैसे मेरी ही कृति मृगाङ्कदूतम्। अथवा जैसे रामचन्द्र अम्बिकादत्तशाण्डिल्य-प्रणीत कामदूतम्, कृपाराम त्रिपाठी-कृत तरङ्गदूतम्। अथवा हरिनारायण दीक्षित कृत हनुमद् दूतम्, पी०के० नारायण पिल्लै-प्रणीत मयूरदूतम्, इच्छाराम द्विवेदि-प्रणीत मित्रदूतम्।

**सन्देशकाव्य** जैसे कुटुम्बरामशास्त्रि-प्रणीत इन्दुसन्देशः, कुञ्चन नम्बूदरी-प्रणीत चातकसन्देशः, वेलूरि सुब्बारावशर्म-प्रणीत सुन्दरीमेघसन्देशः, लक्ष्मणसूरि-प्रणीत विप्रसन्देशः।

**अन्यापदेश काव्य** जैसे मेरा ही आर्यान्योक्तिशतकम् तथा मृगमृगेन्द्रान्योक्तिशतकम्। अथवा जैसे बदरीनाथशर्म-प्रणीत अन्योक्तिसाहस्री।

**गीतिकाव्य** जैसे मेरी ही काव्यरचना गीतभारतम्। अथवा जैसे राधावल्लभ त्रिपाठी-प्रणीत गीतधीवरम्, भट्टमथुरानाथशास्त्रि-प्रणीत गीतिवाणी, पुल्लेलरामचन्द्र-प्रणीत गीताञ्जलिः, अमीरचन्द्रशास्त्रि-प्रणीत गीतिकादम्बरी, रुद्रदेवत्रिपाठि-प्रणीत गीतिगङ्गा, विरूरचिदम्बर जोइसकृत गीतरामायणम्, एस-वी०बेलणकर-कृत गीतगैर्वाणम्, नृपतिरामभट्टकृत-गीतगिरीशम्, वीरेन्द्रकुमारभट्टाचार्य-कृत गीतगौराङ्गम्, श्रीधरभास्करवर्णेकर-कृत संस्कृतगीतमाला, हरिदत्तशर्म-कृत गीतकन्दलिका, अभिराजराजेन्द्र-प्रणीत वाग्वधूटी, मृद्वीका, श्रुतिम्भरा, मत्तवारणी तथा शालभञ्जिका, पुष्पादीक्षितकृत अग्निशिखा, हरेकृष्णमेहेरकृत मातृगीतिकाञ्जलिः, जनार्दनमणिप्रणीत निस्यन्दिनी आदि।

**स्तोत्रकाव्य** जैसे मेरी कृति पराम्बाशतकम्, नवाष्टकमालिका तथा शनिशतकम्। अथवा जैसे कृष्णदत्तशास्त्रि-प्रणीत रामराघवस्तवनम्, जयनारायणयात्रि-कृत सवितृस्तोत्रम्, रामभद्राचार्य-प्रणीत लघुरघुवरम्, रामचन्द्र अम्बिकादत्त-प्रणीत स्तोत्रावलिः, नारायण वेङ्कटरमणकृत स्तुतिकुसुमाञ्जलिः, स्वामिनाथ-प्रणीत बदरीशसुप्रभातम्, पूजालालकृत स्तोत्रसङ्गीतिका।

**शतककाव्यों** की संख्या (तो) प्रभूत है। विस्तारपूर्वक मेरे द्वारा प्रणीत विंशशताब्दीसंस्कृतग्रन्थसूचीपत्र नामक ग्रंथ में देखना चाहिये।

**प्रहेलिकाकाव्य** जैसे रामाशीष पाण्डेय-कृत प्रहेलिकाशतकम्।

**विमानकाव्यं** यथा मम विमानयात्राशतकम्। यथा वा राधावल्लभ-

त्रिपाठिप्रणीता धरित्रीलहरी। यात्राकाव्यं यथा रामचन्द्र अम्बिकादत्त-शाण्डिल्य-प्रणीतं यात्राप्रसङ्गीयम्, यथा वा ममैव वैशालीशतकम्, गुर्जरशतकम्, उज्जयिनीशतकम्, यवद्वीपसाहित्यशतकम्।

नर्मकाव्यं यथा मम सुभाषितोद्धारशतकम्। यथा वा वागीशशास्त्रि-कृता नर्मसप्तशती, अरुणचन्द्रशास्त्रिकृतं हास्यशतकम्, दिगम्बरमहापात्र-कृतं दुर्नीतिपुराणञ्च।

लहरीकाव्यं यथा मम विस्मयलहरी। यथा वा लहरीदशकं राधा-वल्लभस्य, सरयूलहरी रामभद्राचार्यस्य, साम्बलहरी शतावधानगणेशस्य, अनुकम्पालहरी के०आर० सुब्रह्मण्यस्य, विषादलहरी श्रीभाष्यविजयसारथेः, पूर्णालहरी रसिकलालपटेलस्य, मातृभूलहरी श्रीधरभास्करवर्णेकरस्य, विरहलहरी एस्०वी०वेलणकरस्य, प्रेमलहरी भास्करपिल्लेमहोदयस्येति।

विविधखण्डकाव्यानामयं परिचयो विदुषां परितोषाय प्रदत्तो मया। विस्तृत-परिज्ञानार्थं मम विंशशताब्दीसंस्कृतग्रन्थसूचीपत्रमस्मत्सुहृद्रत्नानामा-चार्यराधावल्लभत्रिपाठिनां वा सूचीपत्रं ग्रन्थान्तरं वा द्रष्टव्यमिति विशेषः।

यच्च राधावल्लभेनोदितम् -जीवनस्यैकदेशनिरूपकं खण्ड-काव्यमिति ( अभिनव० ३।१।४ ) तदपि मन्मन्तव्यसगन्ध्येवेति।

अथ गद्यकाव्यलक्षणम्-

भरताभिमतस्य चूर्णबन्धस्याऽनियताक्षरापरनामधेयस्य चर्चा प्राक् कृतैव तिष्ठति। तदेव गद्यमित्युच्यते।

गद्यं चतुर्विधं प्रोक्तं मुक्तकं वृत्तगन्धि च।  
ततश्चोत्कलिकाप्रायं चूर्णकञ्चान्तिमं मतम्।।९५।।

असमस्तपदं मुक्तं पद्यांशि वृत्तगन्धि च।  
अन्यद्दीर्घसमासाढ्यं चूर्णमल्पसमासकम्।।९६।।

मुक्तकगद्योदाहरणं यथा ममेक्षुगन्धायाम्-

अम्ब! कलङ्किनी जातास्मि। निन्द माम्। भर्त्सय माम्। ताडय माम्। गृहाद्बहिर्निस्सारय माम्। कलङ्कितो मया त्वदुत्सङ्गोऽम्ब! कलङ्कितं मया प्रातः स्मरणीयस्य पितृचरणस्य सुगृहीतनामधेयम् इत्येवमादि।

विमानकाव्य जैसे मेरी काव्यकृति विमानयात्राशतकम्। अथवा जैसे राधावल्लभत्रिपाठी-प्रणीत धरित्रीलहरी। यात्राकाव्य जैसे रामचन्द्र अम्बिकादत्त

शाण्डिल्य–प्रणीत यात्राप्रसङ्गीयम् अथवा जैसे मेरी ही कृतियाँ–वैशालीशतकम्, गुर्जरशतकम्, उज्जयिनीशतकम्, यवद्वीपसाहित्यशतकम्।

नर्मकाव्य जैसे मेरी रचना सुभाषितोद्धारशतकम्। अथवा जैसे वागीश शास्त्री–कृत नर्मसप्तशती, अरुणचन्द्रशास्त्रिकृत हास्यशतकम्, दिगम्बरमहापात्रकृत दुर्नीतिपुराणम्।

लहरीकाव्य जैसे मेरी कृति विस्मयलहरी। अथवा जैसे राधावल्लभ–प्रणीत लहरीदशकम्, रामभद्राचार्य कृत सरयूलहरी, शतावधान आर०गणेश–कृत साम्बलहरी, के०आर० सुब्रह्मण्यकृत अनुकम्पालहरी, श्रीभाष्यम् विजयसारथि–प्रणीत विषादलहरी, रसिकलालपटेल–कृत पूर्णालहरी, श्रीधरभास्कर वर्णेकर कृत मातृभूलहरी, एस्०वी० वेलणकर कृत विरहलहरी, भास्कर पिल्ले–कृत प्रेमलहरी।

विविध प्रकार के खण्डकाव्यों का यह परिचय मैने विद्वज्जनों के परितोषार्थ दिया। विस्तृत परिज्ञान के लिये मेरा विंशशताब्दीसंस्कृतग्रंथसूचीपत्रम् अथवा मेरे सुहृद्रत्न आचार्य राधावल्लभत्रिपाठी का सूचीपत्र या फिर अन्य ग्रंथों को देखना चाहिये।

और जो राधावल्लभ ने कहा–जीवन के एकदेशका निरूपण करने वाला खण्डकाव्य होता है (अभि० ३।१।४) वह लक्षण भी मेरे मन्तव्य के समान (अतः अभिनन्द्य) है।

अब गद्यकाव्य का लक्षण प्रस्तुत है–

आचार्य भरत को अभिमत (पसन्द) अनियताक्षर अपरनाम वाले चूर्णबन्ध की चर्चा पहले ही की जा चुकी है। उसी को (परवर्ती युग में) गद्य कहा गया।

गद्य चार प्रकार का बताया गया है–मुक्तक, वृत्तगन्धि। तदनन्तर उत्कलिकाप्राय तथा अन्तिम चूर्णक।।९५।।

समासहीन पदों वाला गद्य मुक्तक है। पद्यांशों से युक्त (अथवा पद्य जैसा प्रतीत होने वाला) वृत्तगन्धि है। दीर्घ समासों से ओतप्रोत उत्कलिकाप्राय है तथा अल्प समासों से युक्त गद्य चूर्णक है।।९६।।

मुक्तक गद्य का उदाहरण जैसे मेरी कथाकृति इक्षुगन्धा में–

माँ! कलङ्किनी बन गई हूँ। बुरा–भला कहो मुझे। फटकारो मुझे। मारो मुझे। घर से बाहर निकाल दो मुझे। माँ! मैने तुम्हारी गोद कलंकित कर दी। कलंकित कर दिया मैने प्रातःस्मरणीय पिताजी का गर्व के साथ लिया जाने वाला नाम। आदि। (जिजीविषा शीर्षक कथा)

वृत्तगन्धि चापि यथा ममैवेक्षुगन्धायाम्-

मां पश्यन्नेव पितामहोऽवदत्-समीर! कः कालस्त्वामन्विष्यामि? वराकी शुभदा त्वां कुत्र न मार्गयतिस्म? अनुक्त्वैव किञ्चिद् गतोऽसि? चायपेयं सर्वथा शीतलं जातम्। इत्येवमादि।

अत्र कः कालस्त्वामन्विष्यामि इत्ययमंशोऽनुष्टुभं स्पृशति। अनुक्त्वैव किञ्चिद्गतोऽसीत्यपि भुजङ्गप्रयातपादः प्रतीयते।

उत्कलिकाप्रायगद्योदाहरणं यथा मोहनलालशर्मपाण्डेयप्रणीतायां पद्मिन्याम्-विप्रकृष्टविदेशात्समायातो ब्राह्मणोऽयमासीत्सर्वशास्त्रपण्डितः, सारदाशारदासमाराधनोपपादितनवनवोन्मेषप्रस्फुरद्वाग्वैभवः, प्रतिक्षण-विलक्षणसमेधमानाऽसमानशेमुषीकः श्रवणमात्रोपात्तश्रुतिप्रकृतिविकृतिमन्त्र-भागः, प्रतिभाप्रकाशितपदशास्त्रपठनपाठनपाटवः, प्रत्ननूत्नन्यायरत्नप्रभा भासमानान्तःकरणः ज्योतिषमीमांसाकर्मकाण्डप्रकाण्डपण्डितः शिवशक्ति-सुश्रूषाप्रभावप्राप्ततान्त्रिकमन्त्रसिद्धिसमृद्धः।

चूर्णकगद्योदाहरणं यथा राधावल्लभत्रिपाठिप्रणीते विक्रमचरिते-एवञ्च भृशं प्ररुदतां तेषामवसितं दिनम्। अस्ताचलमारुरोह भगवान् भास्करः। विहगाश्च शूकरसमाजरोदने सङ्गतिमिवाचरन्तस्तीव्रं कूजन्तः स्वकुलायान् शिश्रियिरे। पार्श्वस्थो वटवृक्षः प्रतिशाखं विपञ्चीर्वादयामास। शनैश्च कुलायेषु लीना विहगाः। शूकरविहारस्थल्यां परिव्याप्तं गाढपङ्कमिव श्यानं तमोऽवततार धरणीम्। शनैर्निर्वातनिष्कम्पमिव समजनि तत्स्थलम् इत्येवमादि।

वृत्तगन्धि गद्य का भी उदाहरण जैसे मेरी कथाकृति इक्षुगन्धा में ही-

मुझको देखते ही दादाजी बोले-समीर! कितनी देर से तुम्हें खोज रहा हूँ? बेचारी शुभदा ने तुम्हें कहाँ-कहाँ नहीं खोजा? विना कुछ कहे ही चले गये? तुम्हारी चाय एकदम ठंडी हो गई! इत्यादि।

इस गद्यांश में 'कितनी देर से तुम्हें खोज रहा हूँ' यह अंश (छन्दोदृष्ट्या) अनुष्टुप् जैसा लगता है। 'बिना कुछ कहे ही चले गये' यह अंश भी (छन्दोदृष्ट्या) भुजंगप्रयात (के एक चरण) सा प्रतीत होता है।

उत्कलिकाप्राय गद्य का उदाहरण जैसे मोहनलालशर्म पाण्डेय-प्रणीत (उपन्यास) पद्मिनी में यह अंश-दूरवर्ती परदेस से आया हुआ यह ब्राह्मण

समस्त शास्त्रों का पण्डित, सारज्ञान प्रदान करने वाली शारदा के समाराधन से सम्प्राप्त नये-नये उन्मेषों से संवलित प्रस्फुरद् वाग्वैभव वाला, क्षण-प्रतिक्षण विलक्षण गति से विकसित होती हुई अप्रतिम बुद्धिवाला, सुनने मात्र से ही श्रुति की प्रकृति एवं विकृति से युक्त मंत्र-सम्पत्ति को हृदयंगम कर लेने वाला, प्रतिभा से पदशास्त्र (व्याकरण) के पठन-पाठन की पटुता को प्रकाशित करने वाला, प्राचीन एवं नव्य न्याय की रत्नप्रभा से भासमान अन्तःकरण (अधिकार) वाला, ज्योतिष-मीमांसा तथा कर्मकाण्ड का प्रकाण्ड पण्डित, शिव एवं शक्ति की परिचर्या के प्रभाववश सम्प्राप्त तंत्र एवं मंत्र की सिद्धि से समृद्ध था।

**चूर्णक** गद्य का उदाहरण जैसे राधावल्लभत्रिपाठी-प्रणीत विक्रमचरित में-

इस प्रकार, भरपूर चीखते-चिल्लाते ही सिरा गया उनका दिन। भगवान् भास्कर अस्तपर्वत पर जा चढे। पंछी भी, सुअरों की टोली के रोदन में अपना स्वर मिलाते से, तीखी चाँव-चाँव करते घोसलों में जा बैठे। पड़ोस का बरगद का पेड़ भी डाल-डाल पर मानो वीणा बजाने लगा। धीरे-धीरे पंछी घोंसलों में घुस गये। सुअरों की विहार- स्थली में परिव्याप्त गहबर कीचड़ जैसा घना अन्धकार धरती पर उतरने लगा। हौले-हौले वह स्थान वायुशून्य तथा जड सा हो चला। इत्यादि।

**अथ कथालक्षणम्-**

**प्रबन्धात्मकगद्यस्य रूपद्वयमुदाहृतम्।**
**कथेति प्रथमं तत्राऽख्यायिकेत्यपरं मतम्।।९७।।**

**कथा तत्र भवेद्रम्या सरसा कल्पनाश्रिता।**
**दिव्याऽदिव्येतिवृत्तांशा विविधानुभवैर्युता।।९८।।**

**आदौ तत्र नमस्कारः खलादिचरितं तथा।**
**कथाकर्तुरभिप्रायोऽखिलं पद्यमयं भवेत्।।९९।।**

**तत्र क्वचिद्भवेदार्या क्वचिद्वक्त्रापवक्त्रके।**
**क्वचिच्चाप्यात्मसंस्पर्शः प्रतिभाशिल्पमण्डितः।।१००।।**

**तत्रोदाहरणं यथा जग्गूबकुलभूषणप्रणीता जयन्तिका। यथा वा जय-नारायणयात्रिणो मधुमती, रामकरणशर्मणो रयीशः सीमा च, केशव-चन्द्रदाशस्योर्मिचूडाशशिरेखादयः, श्रीनिवासशास्त्रिणश्चन्द्रमहीपतिकृष्ण-तारासूर्यप्रभासर्वाभ्युदयादिकृतयः, मेधाव्रताचार्यस्य कुमुदिनीचन्द्र इत्येवमादि।**

अथाख्यायिकालक्षणम्-

आख्यायिकोपलब्धार्था तस्मादैतिह्यसम्मता।
आश्वासैः संविभक्ता स्यादार्याप्रभृतिमण्डिता।।१०१।।

वर्णिता स्यादियं नेतृमुखेनैवेति केचन।
नैवमित्यपरे तस्मादुभयं भाति सम्मतम्।।१०२।।

आर्यावक्त्रापवक्त्रैश्च ननु भाव्यर्थसूचनम्।
अन्यापदेशपद्धत्याऽश्वासारम्भे विधीयते।।१०३।।

युज्यते च समारम्भे कविवंशानुकीर्तनम्।
कविवृत्तान्तरञ्चापि परपद्यं क्वचित्क्वचित्।।१०४।।

कथा का लक्षण-

प्रबन्धात्मक गद्य का (पूर्वाचार्यों द्वारा) दो प्रकार बताया गया है। उनमें प्रथम है-कथा और दूसरा है आख्यायिका।।९७।।

इन दोनों में रमणीय प्रकृतिवाली, रसवत्ता से ओतप्रोत तथा कल्पना पर आश्रित (गद्यकृति) को कथा कहते हैं जो कि दिव्य अथवा अदिव्य (मानवीय) इतिवृत्तांशों वाली तथा विविध अनुभवों से युक्त होती है।।९८।।

कथा के प्रारंभ में नमस्कार-विधि होती है, खलादि का चरित होता है। तदनन्तर कथाकार का (व्यक्तिगत) अभिप्राय वर्णित होता है। यह सब पद्यमय ही होता है। (न कि गद्य में)।।९९।।

कथा में कहीं आर्या का और कहीं वक्त्र एवं अपरवक्त्र छन्दों का प्रयोग होना चाहिये। कविप्रतिभा के शिल्प से मण्डित कवि का आत्मसंस्पर्श (वैयक्तिक भावनाओं की अभिव्यक्ति) भी कहीं-कहीं होना चाहिये।।१००।।

कथा का उदाहरण जैसे जग्गू बकुलभूषण-प्रणीत जयन्तिका। अथवा जैसे जयनारायणयात्री-प्रणीत मधुमती, रामकरणशर्म-प्रणीत रयीशः तथा सीमा, केशवचन्द्रदाशकृत ऊर्मिचूडा एवं शशिरेखादि कृतियाँ। श्रीनिवासशास्त्री-कृत चन्द्रमहीपति, कृष्णतारा, सूर्यप्रभा तथा सर्वाभ्युदय आदि कृतियाँ। मेधाव्रताचार्य-कृत कुमुदिनीचन्द्र आदि।

आख्यायिका का लक्षण-

आख्यायिका उपलब्ध (लोक में प्राप्त न कि कल्पित) कथानक वाली

अतएव इतिहास-सम्मत होती है। आर्याप्रभृति छन्दों से मण्डित यह कृति आश्वासों में विभक्त होती है।।१०१।।

आख्यायिका (की कथा) का वर्णन नायक के ही मुँह से होना चाहिये, ऐसा कुछेक आचार्यों का कथन है। परन्तु अन्य आचार्य ऐसा नहीं मानते (उनकी दृष्टि में आख्यायिका-कथा का वर्णन स्वयं कवि भी कर सकता है) इसलिये कथावर्णन की दोनो ही पद्धतियाँ सम्मत (उचित) प्रतीत होती हैं।।१०२।।

(आख्यायिका में) आश्वास के प्रारंभ में ही, अन्यापदेश-पद्धति का आश्रय लेकर, भावी कथा आर्या, वक्त्र अथवा अपरवक्त्र छन्दों द्वारा सूचित कर दी जाती है।।१०३।।

प्रारंभ में कविवंश का वर्णन होना उचित है। कविवृत्त के अनन्तर, कहीं-कहीं दूसरे कवियों के पद्य भी उद्धृत किये जा सकते हैं।।१०४।।

इतिहाससम्मतकथाश्रिताऽऽख्यायिकेत्यर्थः। नेयं कल्पनाविलसिता। क्वचिन्नेतृमुखेन वर्णिता, यथा शिवराजविजये कश्चिदंशो भूषणमुखेन कश्चिदंशश्च शिववीरमुखेन वर्ण्यते। क्वचिदन्यमुखेन वर्णिता, यथा हर्षचरिताख्यायिका। नव्याख्यायिकोदाहरणं यथाकृष्णाचार्यप्रणीतश्चन्द्रगुप्तः, देवेन्द्रनाथचट्टोपाध्यायप्रणीतो बङ्गवीरप्रतापादित्यः, वासुदेवशर्मलाटकरप्रणीतं शाहुचरितम्, जगडूरामशास्त्रिप्रणीतं छत्रसालविजयम्, कृष्णशर्मचितलेप्रणीतं लोकमान्यतिलकचरितम्। हरिनारायणदीक्षितकृतं श्रीमदप्पयदीक्षितचरितम्, श्रीनाथहसूरकरप्रणीता सिन्धुकन्या, चेन्नम्माऽजातशत्रुश्च, सुदर्शनशर्मकृतं वीरवैरागिचरितम्, मोहनलालशर्मपाण्डेयप्रणीता पद्मिनीत्येवमादि।

अथोपन्यासलक्षणम्-

कथाऽऽख्यायिकयोः कश्चिन्मिश्रभेदोऽपि साम्प्रतम्।
उपन्यास इति ख्यातो भाषान्तरप्रतिष्ठितः।।१०५।।

कालखण्डविशेषस्य समग्रं जनजीवनम्।
प्रतिबिम्ब इवादर्शे न्यस्यतेऽत्र सविस्तरम्।।१०६।।

क्वचित्सामाजिकी क्रान्तिः सर्वोदयसमर्थिनी।
रूढिपाखण्डविध्वंसो नवाचारः क्वचित्पुनः।।१०७।।

महाकाव्यवदेवायमुपन्यासोऽपि वस्तुतः।
साङ्गोपाङ्गं समग्रञ्च नेतृजीवनचित्रणम्।।१०८।।

इतिहास-सम्मत कथा पर आधारित होती है आख्यायिका, यह भाव है। यह कल्पना-विलसित नहीं होती। यह कहीं (स्वयं) नायक के ही मुँह से वर्णित होती है। जैसे शिवराजविजय में कुछ कथांश (स्वयं) नायक शिववीर के मुख से तथा कुछ भूषण कवि के मुख से वर्णित होता है। कहीं-कहीं कथांश किसी और के मुख से वर्णित होता है जैसे हर्षचरित आख्यायिका (स्वयं कवि के मुख से)।

नई (इस युग की) आख्यायिका का उदाहरण जैसे कृष्णाचार्य-प्रणीत चन्द्रगुप्तः, देवेन्द्रनाथ चट्टोपाध्याय-प्रणीत बङ्गवीरप्रतापादित्यः, वासुदेवशर्मलाटकर-प्रणीत शाहुचरितम्, जगडूरामशास्त्रि-प्रणीत छत्रसालविजयम्, कृष्णशर्मचितले-प्रणीत लोकमान्यतिलकचरितम्, हरिनारायणदीक्षितकृत श्रीमदप्पय्यदीक्षितचरितम्, श्रीनाथहसूरकर प्रणीत सिन्धुकन्या, चेन्नम्मा, अजातशत्रुः, सुदर्शनशर्म-कृत वीरवैरागिचरितम्, मोहनलालशर्म पाण्डेयकृत पद्मिनी। इत्यादि।

उपन्यास का लक्षण-

कथा एवं आख्यायिका का कोई मिश्रित (मिला-जुला) भेद भी वर्तमान युग में उपन्यास के नाम से विख्यात है जो कि संस्कृतेतर भाषाओं में (विशेषरूप से) प्रतिष्ठित है।।१०५।।

उपन्यास में कालखण्ड-विशेष का सांगोपांग जनजीवन, दर्पण में उतरे प्रतिबिम्ब की भाँति विस्तारपूर्वक उपन्यस्त होता है।।१०६।।

इसमें कहीं-कहीं तो सामाजिक क्रान्ति का वर्णन होता है जिसमें समाज के (छोटे-बड़े) हर वर्ग के अभ्युदय का समर्थन होता है और कहीं-कहीं रूढियों एवं पाखण्डों के विध्वंस से उपजे नवाचार (नई समाजव्यवस्था) का वर्णन होता है।।१०७।।

वस्तुतः यह उपन्यास भी महाकाव्य के ही समान नायक के सांगोपांग तथा समग्र जीवन का वर्णन होता है।।१०८।।

धर्मराजनयार्थानां नैव वृत्तं हि तादृशम्।
यदुपन्यासनिर्माणे नोपयोज्यं भवेत्पुनः।।१०९।।
विविधाः सन्त्युपन्यासाः इतिवृत्तानुरोधतः।
कथाप्रस्तुतिभेदाच्च कविप्रतिभयाञ्चिताः।।११०।।

तत्रोदाहरणं यथा रामकरणशर्मप्रणीतौ सीमारयीशौ। यथा वा केशवचन्द्रदाशप्रणीता दिशाविदिशा-पताका-निकषालकाञ्जलिम-धुयानारुणावर्तनाद्युपन्यासाः। यथा रामजीउपाध्यायप्रणीतः द्वा सुपर्णा इति। भगीरथप्रसादत्रिपाठिप्रणीतो मङ्गलमयूखो विश्वनारायणशास्त्रिकृतम् अविनाशि इति वा।

गद्यैर्विद्योतितं यस्माद् गद्यकाव्यं तदीरितम्।
ग्रन्थरूपं तदेवात्र श्रव्यं किञ्चिन्निरूप्यते।।
उपन्यासपदेनापि तदेव परिकल्प्यते।
यथा कादम्बरी यद्वा शिवराड्विजयो मम।।

इति स्वोपज्ञगद्यकाव्यमीमांसायामुपनिबध्नता शिवराजविजयकारेण श्रीमदम्बिकादत्तव्यासेनापि उपन्यासः कथाख्यायिकाभ्यां नातिभिन्न-स्स्वीकृतः।

त्रिपाठिराधावल्लभोऽपि गद्यबद्ध उपन्यासो महाकाव्यमयी कथेति (अभिनव० ३।१।१३) कथयन् स्वल्पशब्दैर्बहु प्रकाशयते।

उपन्यासं लक्षयति द्विवेदी रहसविहारी-

गद्यकाव्यबृहद्ग्रन्थ उपन्यासोऽभिधीयते।
अस्मिन् युगोचितं वस्तु पात्रं कविसमीहितम्।।
देशकालोचितं चित्रं गद्यशिल्पं मनोहरम्।
कल्पितं चापि तत्सर्वं यथार्थं सत्प्रतीयते।।
तदेतल्लक्षणं त्वरितकथनमेव प्रतीयते।

अथ कथानिकालक्षणम्-

प्रतिष्ठाधुरमध्यास्ते कथाभेदो हि कश्चन।
अभीष्टा सर्वभाषासु प्रोच्यते सा कथानिका।।१११।।

गृहीत्वा किमप्युद्देश्यं लोकाभ्युदयकारकम्।
चित्रणेन चरित्राणां सरत्यग्रे कथानिका।।११२।।

क्वचित्पात्रमुखेनैव क्वचिल्लेखककभाषया।
क्वचित्संवादपद्धत्या पूर्वोन्मेषदिशा क्वचित्।।११३।।

शिल्पान्तरैरनेकैश्च निबद्धेयं कथानिका।
लघ्वी दीर्घेति भेदाभ्यां द्विविधैव महीयते।।११४।।

धर्म, राजनीति तथा अर्थ से जुड़ा ऐसा कोई भी घटनाचक्र नहीं जो उपन्यास के निर्माण में (संघटक कथांश के रूप में) उपयोग (वर्णन) के योग्य न होता हो।।१०९।।

इतिवृत्त के अनुरोधवश तथा कथाप्रस्तुति के भेदवश, रचनाकार की प्रतिभा से ओतप्रोत विविध प्रकार के उपन्यास हुआ करते हैं।।११०।।

उपन्यास का उदाहरण जैसे रामकरणशर्म-प्रणीत सीमा तथा रयीशः। अथवा जैसे केशवचन्द्रदाश-प्रणीत दिशाविदिशा, पताका, निकषा, अलका, अञ्जलिः, मधुयानम्, अरुणा तथा आवर्तनम् आदि। अथवा रामजीउपाध्याय-प्रणीत द्वासुपर्णा, भगीरथप्रसादत्रिपाठी-प्रणीत मङ्गलमयूख, विश्वनारायणशास्त्रि-प्रणीत अविनाशि।

'गद्यमय होने के कारण श्रव्यकाव्य-विशेष को ही गद्यकाव्य कहते हैं। उसी को 'उपन्यास' नाम से भी जाना जाता है, जैसे-कादम्बरी अथवा मेरा शिवराजविजय।'

अपनी **गद्यकाव्यमीमांसा** में ऐसा लिखते हुए शिवराजविजयकार पं० अम्बिकादत्त व्यास ने भी उपन्यास को कथा एवं आख्यायिका से बहुत भिन्न नहीं माना है।

राधावल्लभ त्रिपाठी ने भी 'गद्यबद्ध महाकाव्यमयी कथा को उपन्यास' मानते हुए स्वल्प शब्दों में ही बहुत कुछ कह दिया है।

रहसबिहारी द्विवेदी ने जो परिभाषा दी है उपन्यास की, वह त्वरित-कथन मात्र प्रतीत होती है (अर्थात् अपूर्ण है)।

**कथानिका** (कहानी का) लक्षण-

कथा का ही कोई भेद-विशेष जो (संस्कृत ही नहीं प्रत्युत) समस्त (भारतीय) भाषाओं में लोकप्रिय है तथा प्रतिष्ठा के शिखर पर विद्यमान है-उसे कथानिका (कहानी) कहते हैं।।१११।।

लोक का अभ्युदय सिद्ध करने वाले किसी भी उद्देश्य को लेकर, मानवीय चरित्रों के चित्रण के माध्यम से कहानी अग्रसर (विकसित) होती है।।११२।।

कहीं-कहीं तो पात्र (नायक) के ही मुँह से, कहीं लेखक (कथाकार) की ही भाषा के माध्यम से, कहीं (पात्रों के) संवाद के माध्यम से और कहीं पूर्वोन्मेष (Flash Back) के माध्यम से।।११३।।

अथवा अन्यान्य शिल्पों (तकनीकों) के माध्यम से लिखी गई यह कहानी लघु तथा दीर्घ के भेद से दो प्रकार की मानी जाती है।।११४।।

**मार्मिकत्वमेव कथायाः प्राणतत्त्वम् । कथाया निर्वहणं यद्यद्भुतरसेन स्यात्तर्हि श्रेयस्करमिति विशेषः।**

**तत्रोदाहरणं यथा ममैव कथासङ्कलना इक्षुगन्धा, राङ्गडा च। यथा वा राधावल्लभत्रिपाठिन उपाख्यानमालिका, प्रमोदभारतीयस्य सहपाठिनी, वनमालिविश्वालस्य नीरवस्वनः, प्रभुनाथद्विवेदिनः श्वेतदूर्वा, प्रशस्यमित्रशास्त्रिणोऽनाघ्रातं पुष्पम्, अशोकपुरनाट्टुकरस्यानामिका, वीणापाणिपाटन्या अपराजिता, नलिनीशुक्लायाः कथासप्तकम्।**

**इयमेव कथा नैकखण्डपरिसमाप्ता विविधबृहद्घटनाचक्रवर्णनपरा दीर्घकथेत्युच्यते। तदुदाहरणं यथा राधावल्लभत्रिपाठिन उपाख्यानमालिका। यथा वा ममैव प्रणयी प्रीतिकूटस्येति ( अनाख्याता बाणभट्टात्मकथा )।**

**अथ लघुकथालक्षणम्-**

**नाऽतिविस्तृतसन्दर्भा विद्युदुन्मेषसन्निभा।**
**नूनं लघुकथेयं स्यादेकपात्रावसायिनी।।११५।।**

**अकस्माद्धि परीहारश्चिरसंस्तुतवर्त्मनः।**
**असंस्तुतसरणेश्चाऽप्यङ्गीकारो ह्यतर्कितम्।।११६।।**

**सुग्रहणमग्राह्यस्य गृहीतस्याप्युपेक्षणम्।**
**कस्यचन सङ्कल्पस्य झटित्येव समुद्भवः।।११७।।**

**भावोन्मेषो विवर्तो वा भावानां समयोचितः।**
**चिररूढमनोभावस्यापि द्राक्परिवर्तनम्।।११८।।**

**उल्कापिण्डसदृक्षाभा हृत्तन्त्रीझङ्कृतिक्षमा।**
**अल्पाक्षराऽल्पपात्रापि कथा लघ्वी महीयते।।११९।।**

मार्मिकता कहानी का प्राणतत्त्व है। कथा का निर्वहण (समापन) यदि अद्भुत रस में हो तो श्रेयस्कर माना जाता है।।

कहानी का उदाहरण जैसे मेरी ही कथासंकलनायें-इक्षुगन्धा तथा राङ्गडा अथवा जैसे राधावल्लभत्रिपाठि-प्रणीत उपाख्यानमालिका (दीर्घकथा) प्रमोदभारतीय-प्रणीत सहपाठिनी, वनमाली विश्वाल-प्रणीत नीरवस्वनः, प्रभुनाथद्विवेदि-प्रणीत श्वेतदूर्वा, प्रशस्यमित्रशास्त्रिप्रणीत अनाघ्रातं पुष्पम्, अशोकन

पुरनाट्टुकरप्रणीत अनामिका, वीणापाणि पाटनीकृत अपराजिता तथा नालिनीशुक्ल-प्रणीत कथासप्तकम्।

यही कथा जब अनेक खण्डों में समाप्त होती है तथा वैविध्ययुक्त वृहद् घटनाचक्रों के वर्णनों में अवसित होती है तो **दीर्घकथा** कही जाती है। दीर्घकथा का उदाहरण है राधावल्लभत्रिपाठी की कथाकृति उपाख्यानमालिका। अथवा मेरी ही दीर्घ कथा-प्रणयी प्रीतिकूटस्य (बाणभट्ट की अनकही आत्मकथा)।

**लघुकथा का लक्षण-**

जिसका सन्दर्भ (कथासूत्र) अत्यन्त विस्तृत न हो तथा जो विद्युदुन्मेष (बिजली की कौंध) जैसी क्षणसंवेदिनी हो ऐसी (प्रायः) एक ही पात्र से (प्रारंभ एवं) समाप्त होने वाली होती है निश्चित रूप से लघुकथा।।११५।।

चिरकाल से पालित होते आ रहे मार्ग का अकस्मात् परिहार (छूट जाना) तथा असंस्तुत (अपरिचित) पद्धति का अतर्कित रूप से अंगीकार (अपना लेना)।।११६।।

अग्राह्य का सरलता से ग्रहण, गृहीत की (उतनी ही सरलता से) उपेक्षा अथवा किसी संकल्प का झट से प्रादुर्भाव।।११७।।

समयोचित किसी भाव का उन्मेष अथवा अनेक भावों का घात-प्रतिघात अथवा चिरकाल से दृढताको प्राप्त किसी मनोभाव का विद्युद्गति से परिवर्तित हो जाना।।११८।।

उल्कापिण्ड टूटने जैसी सूरत वाली, हृदयतंत्री को झंकृत कर देने में समर्थ, अल्पाल्प अक्षरों वाली, अल्पाल्प ही पात्रों वाली तथा लघु आकार-प्रकार वाली लघुकथा प्रशंसनीय होती है।।११९।।

**यथा मल्लघुकथासङ्कलना चित्रपर्णी। यथा वा कृष्णदत्त-शर्मशास्त्रिणः शुष्को वृक्षः, इच्छारामद्विवेदिनः एकादशी, केशवचन्द्र-दाशस्योर्मिचूडा इत्येवमादि।**

**काव्यप्रभेदान् विवृण्वता ध्वनिकारेण यदुक्तम्-यतः काव्यस्य प्रभेदाः-मुक्तकं संस्कृतप्राकृतापभ्रंशनिबद्धम्। सन्दानितकविशेषक-कलापककुलकानि पर्याय-बन्धः परिकथा सकलकथा खण्डकथा सर्गबन्धोऽभिनेयार्थमाख्यायिका कथेत्येवमादयः। तदाश्रयेणापि संघटना विशेषवती भवति इति। ध्वन्या० ३।७ वृत्तिः।**

तत्र मुक्तकादीनि यथावसरं प्राग्व्याख्यातानि। पर्यायबन्धोऽपि नामातिकुलकं प्रबन्धकाव्यमध्यवर्ति वसन्तादिवर्णनम्। तद्यथाऽभिनवगुप्तपादाचार्योऽधिलोचनम्-अवान्तरक्रियासमाप्तावपि वसन्तवर्णनाद्येकवर्णनीयोद्देशेन प्रवृतः पर्यायबन्ध इति।

परिकथादिविषयेऽप्याह महामाहेश्वरः-एकं च धर्मादिपुरुषार्थमुद्दिश्य प्रकारवैचित्र्येणाऽनन्तवृत्तान्तवर्णनप्रकारा परिकथा। एकदेशवर्णना खण्डकथा। समस्तफलान्तेतिवृत्तवर्णना सकलकथेति।

उदाहरण जैसे मेरी लघुकथाओं का संग्रह-चित्रपर्णी। अथवा जैसे कृष्णदत्तशास्त्री-प्रणीत शुष्को वृक्षः। इच्छारामद्विवेदी-प्रणीत एकादशी तथा केशवचन्द्रदाश-प्रणीत ऊर्मिचूडा आदि।

काव्य-प्रभेदों का विवरण प्रस्तुत करते हुए ध्वनिकार ने जो कहा-क्योंकि काव्य के भेद-प्रभेद होते हैं-मुक्तक, जो संस्कृत प्राकृत एवं अपभ्रंश में निबद्ध होते हैं। सन्दानितक, विशेषक, कलापक, कुलक, पर्यायबन्ध, परिकथा, सकलकथा, **खण्डकथा**, सर्गबन्ध, अभिनेयार्थ आख्यायिका तथा कथा एवं इसी प्रकार के अन्यभेद। इनके आश्रय से भी संघटना वैशिष्ट्य से संवलित हो जाती है।-ध्वन्या० ३।७ की वृत्ति।

इनमें से मुक्तक आदि की तो यथावसर पहले ही व्याख्या की जा चुकी है। **पर्यायबन्ध** कुलक एवं प्रबन्ध के मध्यवर्ती काव्य को कहते हैं-वसन्तवर्णनादि (लम्बे) सन्दर्भों को। जैसा कि आचार्य अभिनवगुप्त ने लोचनटीका में लिखा है-

अवान्तर (अन्यान्य) क्रियाओं की समाप्ति हो जाने पर भी जो वसन्तवर्णनादि एकमात्र सन्दर्भ के वर्णन से प्रवृत्त होता है, उसे **पर्यायबन्ध** कहा जाता है।

**परिकथा** आदि के विषय में भी महामाहेश्वर (अभिनवगुप्त) ने कहा है-धर्म आदि किसी एक ही पुरुषार्थ को उद्देश्य बनाकर, जब नाना प्रकार से अनन्त वृत्तान्तों का वर्णन किया जाय तो उस पद्धति को **परिकथा** कहते हैं।

एकदेशीय (आंशिक, खण्डविशेष) वर्णना को **खण्डकथा** कहते हैं।

सम्पूर्ण फलावाप्ति से समाप्त होने वाले इतिवृत्त के वर्णन से युक्त कृति को **सकलकथा** कहते हैं।

**एकमेव समुद्दिश्य पुरुषार्थं प्रवर्तिताः।**
**याश्च प्रकारवैचित्र्यैस्ता वै परिकथाः स्मृताः।।१२०।।**

खण्डकाव्यसदृक्षैव याऽप्येकदेशवर्णना।
सैव खण्डकथा ख्याता हृच्चमत्कारकारिणी।।१२१।।

आनन्दवर्धनोद्दिष्टा सेयं खण्डकथा पुनः।
मान्या लघुकथैवेति त्रिवेणीकविसम्मतिः।।१२२।।

योऽपि दीर्घकथाभेदो मया पूर्वं निरूपितः।
सकलकथापर्यायः सोऽपि मान्योऽस्तु कोविदैः।।१२३।।

तदेवं सुस्पष्टं यदानन्दवर्धनाभीष्टा खण्डकथैव लघुकथाऽद्यतनी। तद्वदेव सकलकथाऽपि दीर्घकथा। समस्तफलान्तेतिवृत्तवर्णनत्वात्।

पशुपक्षिसरीसृपवनस्पतिप्रभृत्याश्रिताः कथाश्चापि कथानिकालघुकथादीर्घकथास्वेवान्तर्भवन्तीति विशेषः। तत्रोदाहरणं यथा राधावल्लभत्रिपाठिप्रणीतं विक्रमचरितम्। यथा वा ममैव कान्तारकथा।

कथानिकां लघुकथाञ्चाभिन्नां मन्वानेन द्विवेदिरहसविहारिणा यत्प्रोक्तम्-

उपन्यासस्य चैकांशश्चारुगद्यसमन्वितः।
प्रायशः कल्पितं वृत्तं समाश्रित्य प्रवर्तते।।
स्थाने काले क्रियायाञ्च तत्रैक्यं तथ्यगर्भितम्।
प्रेरकञ्च सदुद्देश्यं यस्याः लघुकथा च सा।।

तन्न, कथानिकालघुकथयोर्मध्ये मौलिकभेदोपस्थितिवशात्। तत्सर्वं मया प्राग्व्याख्यातमेव।

यच्चाऽभिनवकाव्यालङ्कारसूत्रकारेणोदितम्-जीवनस्यैकदेशनिरूपणपरमाख्यानं कथा (अभि० ३।१।१२) तत्कथानिकालक्षणमेव सुग्राह्यम्।

अथ च यथावृत्तस्य स्मृत्याऽऽख्यानं संस्मरणम् (३।१।१४) शब्दैर्घटनाया व्यक्तेश्चित्रमिव निर्मितं रेखाचित्रम् (३।१।१५) जीवनचरितस्यैव प्रकारविशेष आत्मकथा (३।१।१७) यात्राया यथाऽनुभूतं वर्णनं यात्रावृत्तमिति (३।१।१८) लक्षयता राधावल्लभत्रिपाठिना यथा संस्मरण-रेखाचित्र-जीवनचरितात्मकथा-यात्रावृत्तादीनि कथारूपाणि व्याख्यातानि तान्यभिनन्दनीयानि। वस्तुतः सर्वमिदं कथाया नामान्तरमात्रम्। एषां पृथगङ्गीकारेणाऽनवस्थैव स्यात्।

सम्प्रति चम्पूकाव्यसन्दर्भः-

मिश्रकाव्यमिति प्रोक्तं गद्यपद्यविमिश्रणात्।
तदेव कैश्चनाचार्यैश्चम्पूकाव्यमपि स्मृतम्।।१२४।।

**कथायां नाटके चापि मिश्रणं गद्यपद्ययोः।**
**दृश्यते चेत्ततः कस्माच्चम्पूस्तदतिरिच्यते।।१२५।।**

(इस प्रकार) एक ही पुरुषार्थ को लक्ष्य बनाकर प्रणीत की गईं, प्रकार-वैचित्र्य से ओतप्रोत जो कथायें होती हैं, उन्हें **परिकथा** कहते हैं।।१२०।।

खण्डकाव्य के ही समान एकदेशीय वर्णन वाली तथा हृच्चमत्कार की सृष्टि करने वाली कथा को **खण्डकथा** कहते हैं।।१२१।।

आचार्य आनन्दवर्धन द्वारा उद्दिष्ट यही खण्डकथा **लघुकथा** (आज की) के रूप में भी मान्य होनी चाहिये ऐसी **त्रिवेणी कवि** की सम्मति है।।१२२।।

**दीर्घकथा** नाम का भी जो कथाभेद मैने पहले निरूपित किया है वह भी **सकलकथा** के रूप में विद्वज्जनों द्वारा मान्य होना चाहिये।।१२३।।

तो इस प्रकार सुस्पष्ट है कि (आनन्दवर्धनाभिनवगुप्ताभिमत) खण्डकथा ही आज की लघुकथा है। उसी प्रकार (उस युग की) सकलकथा ही (आज की) दीर्घकथा है। समस्त फल का प्रदर्शन करने वाले इतिवृत्त का वर्णन करने के कारण।

पशुपक्षी, सरीसृप, वनस्पति आदि पर आधारित कथायें भी कथानिका, लघुकथा एवं दीर्घकथा में ही अन्तर्भूत हो जाती हैं, यह विशेष बात है। उसका उदाहरण है राधावल्लभत्रिपाठि-प्रणीत विक्रमचरितम्। अथवा मेरी ही कथाकृति-कान्तारकथा (Jungle Book)।

कहानी और लघुकथा को अभिन्न मानते हुए रहसविहारी द्विवेदी ने जो कहा है-'सुन्दर गद्य से समन्वित, प्रायः कल्पित कथा पर समाश्रित, देश-काल एवं क्रिया की एकता से युक्त, तथ्यों से भरा-पुरा, प्रेरक सदुद्देश्य वाला उपन्यास का ही एक अंश (खण्ड) लघुकथा है।'

उनका यह कथन ठीक नही है-कहानी (कथा) एवं लघुकथा में मौलिक भेद होने के कारण । वह सब मैंने पहले ही स्पष्ट कर दिया है।

और जो अभिनवकाव्यालंकारसूत्रकार त्रिपाठी ने कहा- जीवन के एक अंशविशेष का निरूपण करने वाला आख्यान ही कथा है, वह कहानी का ही लक्षण होने के कारण सुखेन ग्राह्य है।

पुनश्च, बीती हुई घटना का यथावत् स्मृतिपरकवर्णन ही **संस्मरण** है, शब्दों के द्वारा व्यक्ति अथवा घटना का चित्र सा खड़ा कर देना ही **रेखाचित्र** है,

किसी महापुरुष का प्रेरणाप्रद चरितवर्णन ही **जीवनचरित** है, जीवनचरित का ही एक विशिष्ट भेद **आत्मकथा** है। यात्रा का यथानुभूत वर्णन ही **यात्रावृत्त** है- इस प्रकार परिभाषित करते हुए राधावल्लभ त्रिपाठी द्वारा जिस प्रकार संस्मरण, रेखाचित्र, जीवनचरित, आत्मकथा एवं यात्रावृत्त आदि कथारूपों की व्याख्या की गई है, वह सब स्वागतयोग्य ही है।

वस्तुतः ये सब कथा के नामान्तरमात्र हैं। इनकी पृथक् सत्ता मानने से '**अनवस्था**' ही पैदा होती है।

अब **चम्पूकाव्य** का सन्दर्भ-

गद्य तथा पद्य शैलियों के विशिष्टकोटिक मिश्रण के कारण जिसे मिश्रकाव्य कहा गया है उसी काव्य-भेद को कुछेक आचार्य चम्पूकाव्य भी कहते हैं।।१२४।।

कथा और नाटक में भी (यद्यपि) गद्य एवं पद्य का मिश्रण होता है। यदि ऐसा है तो फिर चम्पूकाव्य कैसे कथा एवं नाटक से अतिरिक्त है??१२५??

**कथाया नाटकस्यापि प्रकृतिर्गद्यसंश्रया।**
**वृत्तवर्णनप्राचुर्यात्संवादानाञ्च योगतः।।१२६।।**

**स्वाभाविकं न कुत्रापि पद्यबन्धस्य मेलनम्।**
**पूर्वाग्रहवशादेव कविना तद् विधीयते।।१२७।।**

**कथायां कमप्यादर्शं सत्यं यद्वा चिरन्तनम्।**
**प्रतिष्ठापयितुं पद्यं प्रसङ्गोचितमङ्ग्यते।।१२८।।**

**संवादप्रचुरे नाट्येऽप्यकस्मादृतुवर्णने।**
**नायिकारूपलावण्यव्यवहारादिचित्रणे।।१२९।।**

**विच्छित्तिमतुलां स्रष्टुं कर्तुमाकर्षणं महत्।**
**गद्यसंवादजनितं चित्तोद्वेगं व्यपोहितुम्।।१३०।।**

**प्रयुङ्क्ते नाट्यकारोऽसौ पद्यबन्धं रसोल्बणम्।**
**नाट्यप्रकृतिभिन्नं यत्तदभिन्नं प्रतीयते।।१३१।।**

**मिश्रणं किन्तु चम्प्वां तत्सहजं गद्यपद्ययोः।**
**तयोरेकतरस्यापि प्रयोगे न दुराग्रहः।।१३२।।**

(उसका उत्तर है कि वस्तुतः) कथा और नाटक की भी प्रकृति गद्यात्मक ही होती है-कथ्य तथ्यों के प्राचुर्यवश तथा संवादों के योगवश।।१२६।।

कथा और नाटक में (गद्य के साथ) पद्यबन्ध का मेलन कहीं भी स्वाभाविक (नैसर्गिक या शैलीजन्य) नहीं होता। ऐसा कवि के द्वारा पूर्वाग्रहवश ही किया जाता है।।१२७।।

(मूलतः गद्य प्रकृति वाली) कथा में किसी आदर्श अथवा चिरन्तन सत्य को प्रतिष्ठित (High light) करने के लिये ही, प्रसंग के अनुकूल, पद्य का प्रयोग किया जाता है।।१२८।।

संवाद-प्रचुर नाटक में भी अकस्मात् ऋतुवर्णन-सन्दर्भ आ जाने पर (अथवा) नायिका के रूप-लावण्य तथा व्यवहारादि का चित्रण आ जाने पर।।१२९।।

अतुलनीय विच्छित्ति (साहित्यिक सौन्दर्य) की सृष्टि के उद्देश्य से, महान् आकर्षण उत्पन्न करने के लिये तथा गद्यात्मक संवादों से उत्पन्न (दर्शकों के) चित्तोद्वेग को दूर करने के लिये।।१३०।।

नाट्यकार रसोल्वण पद्यबन्ध को (बीच-बीच में) प्रयुक्त करता है जो कि नाट्य की (गद्यात्मक) प्रकृति से भिन्न होता हुआ भी उससे अभिन्न ही प्रतीत होता है।।१३१।।

परन्तु (कथा एवं नाटक की अपेक्षा) चम्पू में वह गद्य एवं पद्य का मिश्रण सहज होता है। उसमें से किसी भी एक के प्रयोग में (कवि का) कोई दुराग्रह नहीं होता है।।१३२।।

**पथिको हि यथा कश्चित् स्वेच्छया प्रचलन्पथि।**
**विश्राम्येत्तरुसंस्थाने विश्रम्याथ पुनश्चलेत्।।१३३।।**

**नैव पूर्वाग्रहः कोऽपि न च लक्ष्यं विलक्षणम्।**
**प्रमाणं स्वरुचिश्चैव तस्य विश्रमयात्रयोः।।१३४।।**

**चम्प्वामपि तथा कर्त्रा गद्यं पद्यं प्रयुज्यते।**
**यथारुचि यथामात्रं पर्यायेण यथायथम्।।१३५।।**

**स्वाभाविकं ततश्चम्प्वां गद्यपद्यविमिश्रणम्।**
**चम्पूप्रकृतिरेवैतन्मिश्रणं गद्यपद्ययोः।।१३६।।**

**साङ्काऽप्यथ च सोच्छ्वासा भवेच्चम्पूरियम्पुनः।**
**उक्तिप्रत्युक्तिविष्कम्भशून्यापीति च केचन।।१३७।।**

**प्रबन्धमुक्तकाभ्याञ्च चम्पूरपि मता द्विधा।**
**करम्भकञ्च विरुदं मुक्तकं जयघोषणा।।१३८।।**

**यद्यपि चम्प्वामिव कथायां नाटकादिष्वपि गद्यपद्यमिश्रणं सन्दृश्यते। तथापि न कथमपि कथानाटके चम्पूपदवाच्ये। कुत इत्युच्यते। गद्यपद्यमिश्रणं चम्पूकाव्यस्य स्वरूपमेव। प्रकृतिरेव। स्वाभाविको धर्म इति वक्तव्यम्। परन्तु न तन्मिश्रणं कथानाटकयोः प्रकृतिः पूर्वाग्रहजन्यपद्यप्रयोगत्वात्।**

जैसे कोई राहगीर, मन-मुताबिक सफर तय करता हुआ किसी पेड़ की छाया में (स्वेच्छया) सुस्ताने लगता है और सुस्ता कर पुनः चलने लगता है।।१३३।।

उस बटोही के सुस्ताने या चल पड़ने में प्रमाण या कारण उसकी अपनी पसन्द ही होती है। उसमें न कोई पूर्वाग्रह होता है और नहीं कोई विलक्षण लक्ष्य।।१३४।।

चम्पू काव्य में भी, उसी प्रकार रचनाकार अपनी रुचि से ही कभी गद्य का तो कभी पद्य का प्रयोग करता है-यथोचित मात्रा में तथा बारी-बारी।।१३५।।

इस प्रकार, चम्पूकाव्य में गद्य एवं पद्य का मिश्रण (पूर्णतः) स्वाभाविक होता है (वस्तुतः) गद्य तथा पद्य शैलियों का यह मिश्रण ही चम्पूकाव्य की प्रकृति है।।१३६।।

चम्पू रचना साङ्क (अंक अर्थात् कवि की स्वारस्योक्ति से युक्त) उच्छ्वासों में विभक्त होती है। कुछेक आचार्यों के मतानुसार चम्पू उक्ति-प्रत्युक्ति वाले विष्कम्भक से शून्य भी होती है।।१३७।।

प्रबन्ध और मुक्तक भेदों की दृष्टि से चम्पू भी दो प्रकार की होती है। मुक्तक कोटि के चम्पू का उदाहरण है-करम्भक, विरुद तथा जयघोषणा आदि।।१३८।।

यद्यपि चम्पू के ही समान (गद्यात्मक) कथा एवं नाटक में भी गद्य तथा पद्य का मिश्रण दिखाई पड़ता है। तथापि, कथा एवं नाटक को किसी भी प्रकार चम्पू पद से सम्बोधित नहीं किया जा सकता है। क्यों? इसका उत्तर दिया जा रहा है।

गद्य और पद्य का मिश्रण (तो) चम्पूकाव्य का स्व-रूप ही है। प्रकृति ही है। स्वाभाविक धर्म है (चम्पू का) ऐसा कहना चाहिये। परन्तु गद्य-पद्य का

वह मिश्रण कथा एवं नाटक की प्रकृति नहीं है–पूर्वाग्रहजन्य पद्य का (उनमें) प्रयोग होने के कारण।

**अङ्केनसहितेति साङ्का। कविस्वाभिप्रायनिवेदयितृशब्दसमूहविशेषाधिष्ठितेत्यर्थः। यथा नलचम्प्वां प्रतिसर्गान्तपद्यं 'हरिचरणसरोजद्वन्द्वमौलि' पदावल्याः प्रयोगः। सोच्छ्वासा उच्छ्वासैर्विभक्ता। परं नियमातिरेकोऽपि दृश्यते। तद्यथा–भोजप्रणीतरामायणचम्पूः काण्डेषु विभक्ता। मदालसाचम्पूश्चाप्युल्लासेषु विभक्ता।**

**उक्तिप्रत्युक्तिराकाशभाषितम्। विष्कम्भकश्चापि भूतभाविघटनासूचकः कश्चिदर्थोपक्षेपकविशेषो नाटकेषु। ताभ्यां शून्या विरहिता भवति चम्पूरिति गद्यपद्यानुबन्धिनाटकादस्याः पार्थक्यम्।**

**किञ्च, मुक्तकप्रबन्धाभ्यां चम्पूरपि द्विधा। तत्र करम्भकविरुदजयघोषणादिकं मुक्तकम्। करम्भकं तु भाषाभिर्विविधाभिर्विनिर्मितमिति साहित्यदर्पणकारः। निदर्शनभूता तदुपज्ञैव षोडशभाषामयी प्रशस्तिरत्नावली।**

**गद्यपद्यमयी राजस्तुतिर्विरुदमुच्यते इत्यपि साहित्यदर्पणकारः। यथा विरुदमणिमाला। जयघोषणाद्युदाहरणं गवेषणीयम्।**

अंक से जो युक्त हो उसे 'साङ्का' कहते हैं। कवि के स्वाभिप्राय (पहचान) को निवेदित करने वाले शब्द–समूह–विशेष से अधिष्ठित होना–यह अर्थ है साङ्क होने का। जैसे नलचम्पू में प्रत्येक उच्छ्वास के अन्तिम पद्य में–**हरिचरणसरोजद्वन्द्वमौलि** पदावली का प्रयोग मिलता है।

सोच्छ्वासा का अर्थ है–उच्छ्वासों में विभक्त। परन्तु इस नियम का अतिरेक भी दीखता है। उदाहरणार्थ–भोजप्रणीत रामायणचम्पू काण्डों में विभक्त है। मदालसाचम्पू भी उल्लासों में विभक्त है।

उक्तिप्रत्युक्ति कहते हैं आकाशभाषित को। विष्कम्भक भी नाटकों में भूत तथा भावी घटनाओं की सूचना देने वाला कोई अर्थोपक्षेपक–विशेष माना गया है (जिसमें उक्ति–प्रत्युक्ति का सहारा लिया जाता है) उन दोनों से (उक्ति–प्रत्युक्ति तथा विष्कम्भक) शून्य होती है चम्पू, इस प्रकार गद्यपद्यानुबन्धी नाटक से इसका पार्थक्य सिद्ध होता है (नाटक में विष्कम्भक होता है)

पुनश्च, मुक्तक तथा प्रबन्ध के भेदों से चम्पू भी दो प्रकार की होती है। उनमें करम्भक, विरुद, जयघोषणादि मुक्तककोटि की चम्पू हैं।

**करम्भक** विविध भाषाओं से निर्मित होता है ऐसा साहित्यदर्पणकार का कहना है। करम्भक का उदाहरण है उन्हीं की रचना **प्रशस्तिरत्नावली**, जो सोलह भाषाओं को मिला कर लिखी गई है।

गद्यपद्यमिश्रित राजस्तुति को **विरुद** कहते हैं, ऐसा साहित्यदर्पणकार ही कहते हैं। उदाहरण है-विरुदमणिमाला। जयघोषणादि का उदाहरण (अभी) गवेषणीय है।

**प्रबन्धात्मकचम्पूदाहरणं यथा नलचम्पूमदालसाचम्पूयशस्तिलक-जीवन्धररामायणभारतनृसिंहचम्प्वादिकं पूर्वविरचितम्।**

**साम्प्रतिकं यथा ममैवाऽभिराजचम्पूः यथा वा राघवेन्द्राचार्य-पञ्चमुखिप्रणीता विरूपाक्षवसन्तोत्सवचम्पूः, विट्ठलोपाध्यायकृता प्रह्लादचम्पूः, रुद्रदेवत्रिपाठिनश्चतुर्वेदचरितचम्पूः मोहनचरितचम्पूः राजेन्द्रचन्द्रोदयचम्पूश्च, श्रीनिवासप्रणीताऽनन्दरङ्गविजयचम्पूः, के० कृष्णजोइसकृता शरन्न-वरात्रचम्पूः, गोविन्दभट्टकृता सर्वज्ञेन्द्रचम्पूः वनेश्वरविद्यालंकारकृता चित्रचम्पूश्चेति।**

**प्राक्प्रतिष्ठां समादृत्योपलब्धिञ्चापि नूतनीम्।**
**मिश्रोऽभिराजराजेन्द्रो निर्मितिं प्रत्यपादयत्।।१३९।।**

**प्रीयतां तेन वागम्बा धृतशब्दार्थविग्रहा।**
**बुद्धिर्मे राजहंसीव यया स्वैरं प्रवर्त्यते।।१४०।।**

**इति निर्मितिप्रकरणम। अत्र कारिकाणां संख्या -१४०**

**।। इति श्रीमद्गौतमगोत्रोत्पन्नस्य भभयाख्यमिश्रवंशावतंसस्य।।**
**श्रीमद्दुर्गाप्रसादाऽभिराजीतनूजस्य पण्डितप्रकाण्डश्रीमदाद्या-**
**प्रसाद मिश्रभ्रात्रीयस्य त्रिवेणीकविसंज्ञितस्याभिराज-**
**राजेन्द्रस्याभिनवे काव्यशास्त्रेऽभिराजयशोभूषणे**
**निर्मितितत्त्वोन्मेषाख्यश्चतुर्थोंशः।**

प्रबन्धात्मक चम्पूकाव्य का उदाहरण जैसे नलचम्पू, मदालसाचम्पू, यशस्तिलकचम्पू, जीवन्धरचम्पू, रामायणचम्पू, भारतचम्पू, नृसिंहचम्पू-जो पूर्वकाल में प्रणीत किये गये हैं।

वर्तमानयुग के चम्पूकाव्य का उदाहरण जैसे मेरी ही कृति अभिराजचम्पूः। अथवा जैसे राघवेन्द्राचार्य पञ्चमुखि-प्रणीत विरूपाक्षवसन्तोत्सबचम्पूः,

विट्ठलोपाध्यायकृत प्रह्लादचम्पूः, रुद्रदेवत्रिपाठिकृत चतुर्वेदचरितचम्पूः, मोहन-चरितचम्पूः, राजेन्द्रचन्द्रोदयचम्पूः, श्रीनिवासप्रणीत आनन्दरङ्गविजयचम्पूः, के० कृष्णजोइसकृत शरन्नवरात्रचम्पूः, गोविन्दभट्टकृत सर्वज्ञेन्द्रचम्पूः तथा वनेश्वरविद्यालंकारकृत चित्रचम्पूः।

पूर्वकालीन (साहित्यिक) प्रतिष्ठाओं तथा अर्वाचीन उपलब्धियों का समादर करते हुए अभिराजराजेन्द्रमिश्र ने निर्मिति का प्रतिपादन किया है।।१३९।।

शब्दार्थरूपी कलेवर को धारण करने वाली वागधिष्ठात्री सरस्वती उस (वाङ्मय-प्रतिपादन) से प्रसन्न हो जिसके द्वारा मेरी बुद्धिरूपी राजहंसी स्वेच्छया प्रवर्तित की जाती है।।१४०।।

निर्मिति-प्रकरण समाप्त हुआ। इस उन्मेष में कारिकाओं की संख्या-१४०

**इस प्रकार श्रीमद्गौतमगोत्रोत्पन्न भभया नामक मिश्रवंश के अलंकार-स्वरूप महाभागवत पं० रामानन्द मिश्र के पौत्र, श्रीमान् पं० दुर्गा-प्रसादमिश्र एवं अभिराजी के पुत्र, विद्वद्धुरीण प्रो० आद्याप्रसाद मिश्र के भ्रात्रीय त्रिवेणीकवि के रूप में विख्यात अभिराजराजेन्द्र के अभिनव काव्यशास्त्र अभिराजयशोभूषण में निर्मितितत्त्वोन्मेष नामक चौथा अंश परिपूर्ण हुआ।**

***

# अभिराजयशोभूषणम्
## ।।प्रकीर्णतत्त्वोन्मेषः।।

अथ गीतप्रकरणम्-

यच्च गीतिषु सामाख्येत्युक्तमासीत्पुरातनैः।
तेनैव गीतितत्त्वस्य महत्त्वं धुरि संस्थितम्।।१।।

देवानपि समर्थं यत्प्रीणितुं लयमूर्च्छनैः।
गीतमेव तदेकं यन्नृत्यवाद्यसमन्वितम्।।२।।

मद्भक्ता यत्र गायन्ति तत्राऽहमिति नारदम्।
सान्त्वयत्येव गीतायां भगवान्नन्दनन्दनः।।३।।

न तथा व्यञ्जनैस्तृप्तिर्यथा हि चषकाम्भसा।
ननु धर्माभितप्तस्य पथिकस्याभिजायते।।४।।

तथैव रसिकस्यापि महाकाव्यानुशीलनात्।
जायते न तथाऽऽनन्दो यथा गीतेन तत्क्षणम्।।५।।

अलङ्काररसौचित्यध्वनिवक्रोक्तिरीतिभिः।
तस्मादलं यतो गीतं काव्यस्यात्मेति निश्चितम्।।६।।

अलङ्कारादयस्सर्वे कल्लोला इव चञ्चलाः।
उद्भवन्ति विलीयन्ते सन्ततं गीतसागरे।।७।।

तस्मादद्यतने काव्ये गीतमेव महीयते।
अमन्दानन्दसन्दोहस्त्रोतस्त्वादधिसंस्कृतम्।।८।।

गीतिर्गीतिश्च गेयञ्च गानमेतन्मिथस्समम्।
प्रत्ययाच्छब्दवैभिन्न्यं न पुनर्धातुयोगतः।।९।।

प्राचीन आचार्यों के द्वारा जो यह कहा गया कि 'गीतियों की ही साम संज्ञा हैं' उसी से गीतितत्त्व का महत्त्व शिखरारूढ सिद्ध होता है।।१।।

जो (अपनी) लयों तथा मूर्च्छनाओं से देवताओं तक को वशीभूत कर लेने में समर्थ है वह एकमात्र नृत्य एवं वाद्य से समन्वित गीत (तत्त्व) ही है।।२।।

'मेरे भक्तगण जहाँ मेरा गुणानुवाद करते हैं मैं वहीं रहता हूँ' इस प्रकार श्रीमद्भगवद्गीता में भगवान् नन्दनन्दन देवर्षि नारद को सान्त्वना देते हैं।।३।।

घाम से जले-भुने बटोही को व्यञ्जनों (पकवानों) से भी वैसी तृप्ति नहीं प्राप्त होती जैसी कि एक गिलास पानी से।।४।।

ठीक उसी प्रकार, सहृदय पाठक को भी (वृहत्कलेवर) महाकाव्य के अनुशीलन से वैसी आनन्दानुभूति नहीं हो पाती जैसी कि तत्क्षण ही गीतश्रवण से।।५।।

इसलिये अलंकार, रस, औचित्य, ध्वनि, वक्रोक्ति एवं रीति की चर्चा व्यर्थ है क्योंकि यह निश्चित है कि गीत ही काव्य की आत्मा है।।६।।

अलंकारादि सारे के सारे काव्यतत्त्व गीत में उसी प्रकार उठते-गिरते रहते हैं जैसे महासागर में चंचल लहरें बनती-बिगड़ती रहती हैं।।७।।

इसलिये संस्कृत-वाङ्मय में, आज की कविता में, अमन्द आनन्द-सन्दोह का स्रोत होने के कारण गीत-तत्त्व ही महिमामय सिद्ध होता है।।८।।

गीति, गीत, गेय और गान-ये सब परस्पर एक जैसे हैं। मात्र प्रत्यय की भिन्नता से इन शब्दों (के आकार) में भेद है न कि धातु की दृष्टि से (धातु तो सबमें एक ही है-गै धातु)।।९।।

**गीतिर्भवति रागस्य सन्ततं परिवाहिणी।**
**रागहारि च गीतं स्यात्कालिदासमतेन वै।।१०।।**

**गेयं विरचितपदं गोत्राङ्कञ्च भवेत्पुनः।**
**वक्ति विद्योत्तमाजानिरित्यपि क्वचिदन्यतः।।११।।**

**रक्तं स्फुटं समञ्चैव मधुरञ्च मनोहरम्।**
**भावान्वितं भवेद्गीतं ललितञ्चेति शूद्रकः।।१२।।**

**गीतिषु सामाख्येति राजशेखरः। सामयति तोषयति देवानिति साम। साम्नां वेदस्सामवेदः। साम्नि यद्देवतोषकरं तत्त्वं तद्गीतमेव। किञ्च, गीतं न केवलं देवानां मानवानामेव तोषकरमपितु पशुपक्षिमृगादीनामपि चेतोहरं तत्त्वम्। आहितुण्डिकस्तु मधुकरीवाद्यलयैः फणिनं भृशं नर्तयन् स्ववशीकरोति। वन्यगजा वीणानादसम्मोहिता निगृह्यन्ते। किरातगीतवाद्यवशीकृतचेतना मृगा विततां वागुरामपि न पश्यन्ति।**

**नृत्यवाद्यसमन्वितं तदेव गीतं सङ्गीतं तौर्यत्रिकं वाऽप्युच्यते। नृत्यं गीतञ्च वाद्यञ्च त्रिभिस्सङ्गीतमुच्यते। यथा वा तौर्यत्रिकं नृत्यगीतवाद्यं नाट्यमिति त्रयमित्यमरः।**

**गीतं गानमिमे समे इत्यमरः। तद्वदेव गीतिर्गेयं वाऽपि गीतसाम्यं बिभर्ति। कविकुलगुरुकालिदासविरचितेऽभिज्ञानशाकुन्तलनाम्निनाटके पञ्चमाङ्के हंसपदिकाया गीतमाकर्ण्य दुष्यन्तः सप्रशंसं कथयति-अहो रागपरिवाहिणी गीतिरिति। तेन रागपरिवाहित्वमेव गीतिवैशिष्ट्यं प्रतिभाति।**

**तत्रैव नाटकारम्भे सूत्रधारो नटीं ब्रूते-**

गीति होती है राग का निरन्तर प्रवाह धारण करने वाली। इसी प्रकार राग से चित्त को (बरबस) आकृष्ट कर लेने वाला होता है गीत। ऐसा कालिदास का मत है।।१०।।

विद्योत्तमाजानि (कविकुलगुरु कालिदास) ही किसी अन्य स्थल पर यह भी कहते हैं कि गेय गोत्राङ्क से युक्त तथा मर्मस्पर्शी पदों वाला होता है।।११।।

गीत रागयुक्त, स्फुट (स्पष्टाक्षर) सम, मधुर, मनोहर, भाव-संवेदना से अन्वित तथा ललित होता है-ऐसा शूद्रक का अभिमत है।।१२।।

गीतियों की ही संज्ञा साम है-ऐसा राजशेखर कहते हैं। जो देवताओं को (भी) सान्त्वना दे, परितोष दे, वही सामन् है। साममंत्रों के संकलनभूत वेद को ही सामवेद कहते हैं। साममंत्रों में भी, जो देवताओं को भी सन्तुष्ट करने वाला तत्त्व है-वह गीत ही है।

पुनश्च, गीत केवल देवताओं तथा मनुष्यों का ही तोषकर नहीं होता है अपितु पशुओं, पक्षियों तथा मृगादिकों का भी हृदय चुराने वाला तत्त्व होता है। सँपेरा महुअर-वाद्य के लयों से फणी (सर्प) को जीभर नचाता हुआ स्व-वशीभूत कर लेता है। वनैले हाथी (भी) वीणा के नाद से सम्मोहित होकर ही पकड़ लिये जाते हैं। किरातों (कोल-भीलों) के गायन-वादन से वशीकृत चेतना वाले (बेचारे) हिरन फैली हुई जाल की रस्सी को भी नहीं देखते हैं।

नृत्य और वाद्य से समन्वित वही गीत सङ्गीत (क) अथवा तौर्यत्रिक भी कहा जाता है। नृत्य, गीत एवं वाद्य-इन तीनो के समन्वय से संगीत कहा जाता है। अथवा जैसा कि अमरकोषकार ने कहा है-तौर्यत्रिक कहते हैं नृत्य, गीत, वाद्य एवं नाट्य इन तीनों को।

गीत एवं गान-ये दोनो एक सरीखे हैं, ऐसा अमरकोष में कहा गया है। ठीक उसी प्रकार गीति अथवा गेय भी गीत से (पूर्णतः) साम्य रखता है।

कविकुलगुरु कालिदास-प्रणीत अभिज्ञानशाकुन्तल नामक नाटक के पंचम

अंक में (रानी) हंसपदिका के गीत को सुन कर (राजा) दुष्यन्त, प्रशंसा करते हुए, कहता है-अहो, यह गीति तो राग को प्रवाहित करने वाली है!

इस कथन से राग का परिवाहित्व ही गीत का वैशिष्ट्य सिद्ध होता है।

अभिज्ञान शाकुन्तल के ही प्रारम्भ में सूत्रधार नटी से कहता है-

**तवास्मि गीतरागेण हारिणा प्रसभं हृतः।**
**एष राजेव दुष्यन्तः सारङ्गेणातिरंहसा।।**

**अत्रापि गीतरागस्य वैशिष्ट्यं प्रसह्य चित्तहारित्वमेव प्रोक्तम्। तस्माद् गीतम्महीयते स्वेन चेतोहरेण गीतरागेणैवेति स्पष्टम्। किञ्च, मेघदूतेऽपि यक्षिणीवीणावादनप्रसङ्गे कालिदासो गेयवैशिष्ट्यं प्रतिपादयति-**

**उत्सङ्गे वा मलिनवसने सौम्य निक्षिप्य वीणां**
**मद्गोत्राङ्कं विरचितपदं गेयमुद्गातुकामा।**
**तन्त्रीमार्द्रां नयनसलिलैः सारयित्वा कथञ्चि-**
**द्भूयोभूयः स्वयमपि कृतां मूर्च्छनां विस्मरन्ती।।**

**आलोके ते निपतति पुरा सेति शेषः। तदारम्भादेवाध्याहार्यम्। अथाऽत्र गेयसमीक्षा। तत्र वैशिष्ट्यद्वयम्-गोत्राङ्कं विरचितपदञ्चेति। मम गोत्रं नामेति मद्गोत्रं तदेवाऽङ्कश्चिह्नं वैशिष्ट्यं यस्य तद्गेयं मद्गोत्राङ्कम्। वस्तुतो नायकं प्रति नायिकया नायिकां प्रति नायकेन च गीयमाने गेये गोत्राङ्केन स्वाभिप्रायप्रकाशनेनावश्यमेव भवितव्यम्। यथा दुष्यन्तं प्रति लिखिते गेयात्मके स्वमदनलेखे शकुन्तलाऽत्माभिप्रायं प्रकाशयति-**

**तव न जाने हृदयं मम पुनः कामो दिवाऽपि रात्रावपि।**
**निर्घृण! तपति बलीयस्त्वयि वृत्तमनोरथाया अङ्गानि।।इति।**

(हृदय को बरबस) आकृष्ट कर लेने वाले तुम्हारे गीत के राग से मैं यूँ ही झटिति वशीभूत कर लिया गया हूँ जैसे अत्यन्त वेगगामी इस सारंग (मृग) द्वारा यह राजा दुष्यन्त!

इस सन्दर्भ में भी गीत के राग का वैशिष्ट्य बरबस चित्त को चुरा लेना ही बताया गया है। इसलिये, अपने चित्तावर्जक गीतराग से ही गीत प्रतिष्ठित होता है, यह सुस्पष्ट हो गया।

पुनश्च, मेघदूत काव्य में भी, यक्षिणी के वीणावादन-प्रसंग में (महाकवि) कालिदास गेय का वैशिष्ट्य प्रतिपादित करते हैं-

हे सौम्य! मलिन वस्त्रों वाली गोद में वीणा को स्थापित कर, मेरे गोत्राङ्क (नामोल्लेख) से युक्त तथा विशेष रूप से रचित (अर्थात् मर्मस्पर्शी) पदों वाले किसी गेय को गाने की आकांक्षा करती (परन्तु भावावेश के कारण गिरते) नयनाश्रुओं के कारण गीली हो जाने वाली वीणा की तंत्री को यथाकथञ्चित् सुखा कर, अपने ही द्वारा बनाई गई गीत की मूर्च्छना (आरोह तथा अवरोह को) को बार-बार भूलती-बिसरती (मेरी प्रिया संभवतः तुम्हारी दृष्टि में आ पड़ेगी)।

'वह (मेरी प्रिया यक्षिणी) तुम्हारे दृष्टिपथ में समक्ष ही आपड़ेगी' ऐसा श्लोक में कहना शेष है। उसे प्रारम्भ में ही अध्याहृत कर लेना चाहिये।

अब इस श्लोक में (प्रयुक्त) गेय (शब्द) की समीक्षा। गेय के यहाँ दो वैशिष्ट्य दिये गये हैं-गोत्राङ्क और विरचितपदत्व। मेरा गोत्र अर्थात् नाम है मद्गोत्र। वही है अंक या चिह्न अर्थात् वैशिष्ट्य जिसका ऐसा गेय (गीत) **मद्गोत्राङ्क** कहा जायेगा।

वस्तुतः नायक के प्रति नायिका द्वारा अथवा नायिका के प्रति नायक द्वारा गाये जाने वाले (विरहोद्दीपक) गेय में गोत्राङ्क अर्थात् स्वाभिप्राय का प्रकाशन अवश्य ही होना चाहिये। जैसे कि दुष्यन्त के प्रति लिखे गये गेयात्मक अपने मदनलेख (प्रेमपत्र) में शकुन्तला आत्माभिप्राय (गोत्राङ्कता) को प्रकाशित करती है-

मैं तुम्हारा हृदय (तो) नहीं जानती (कि उसमें मेरे प्रति क्या भाव है?) परन्तु तुम्हीं को लक्ष्य बनाकर अपने मनोरथों का वरण करने वाली मेरे अंग-प्रत्यंग को तो कामदेव दिन में और रात में भी हे निष्ठुर! अतिशय सन्तप्त कर रहा है।

**अत्र शकुन्तलायाः स्वाभिप्रायनिवेदनमेव तद्गोत्राङ्कत्वम्। किञ्च, गेयं भवति विरचितपदम्। विशेषेण रचितानि स्वसमीहितार्थसम्पादनक्षमाणि पदानि यस्मिंस्तत्। अनेनैतदुक्तं भवति यद्गेयप्रयुक्तैः पदैर्मर्मस्पर्शिभिरेव भवितव्यम्। तदिदं विरचितपदत्वं राजमहिष्या हंसपदिकाया गीताक्षरेषु द्रष्टव्यम्-**

**अभिनवमधुलोलुपस्त्वं तथा परिचुम्ब्य चूतमञ्जरीम्।**
**कमलवसतिमात्रनिर्वृतो मधुकर! विस्मृतोऽस्येनां कथम्??**

**अत्र शकुन्तलासक्तहृदयं पूर्वोपभुक्तनिजयौवनमाधुरीकं दुष्यन्तं प्रत्यभिव्यक्तो हंसपदिकोपालम्भः निश्चप्रचमतीव मार्मिको विरचित-पदत्वात्। तत्र सहृदया एव प्रमाणम्। अलं भूयः प्रतननेन।**

मृच्छकटिकप्रकरणेऽपि रेभिलगीतं प्रशंसन् नायकश्चारुदत्तो गीतवैशिष्ट्यान्याख्याति। तद्यथा-

रक्तञ्च नाम मधुरं च समं स्फुटञ्च
भावान्वितञ्च ललितञ्च मनोहरञ्च।
किं वा प्रशस्तवचनैर्बहुभिर्मदुक्तै-
रन्तर्हिता यदि भवेद् वनितेति मन्ये।।-मृच्छ० ३।४

अथ गीतभेदनिरूपणम्-
(शास्त्रीयगीतं लोकगीतञ्च)

धातुमातुसमायुक्तं यद्धि नादाऽक्षरात्मकम्।
कर्णामृतं विभक्तञ्च द्विधा गीतं प्रशस्यते।।१३।।

धातुजं वेणुवीणादियन्त्रसञ्चयनिस्सृतम्।
मातुजं मुखजं प्रोक्तं गानरूपेण संस्थितम्।।१४।।

गीतमेतद्यदा रागैर्गीयते शास्त्रसम्मतैः।
काव्यं तादृशगीतानां रागकाव्यं समुच्यते।।१५।।

यत्पुनर्गीयते स्वैरं यथाकण्ठं यथासुखम्।
यथाजनपदग्रामकुलजातिपरम्परम्।।१६।।

इस पद्य में शकुन्तला का (दुष्यन्त के प्रति) अपने मनोभावों का निवेदन ही उसकी गोत्राङ्कता है।

पुनश्च, गेय होता है-विरचितपद! विशिष्टरूप से (खूब सोच-समझ कर) विन्यस्त किये गये हों, अपने समीहित मनोभाव को सम्पादित कर पाने में समर्थ पद-समूह जिसमें, उसे कहेंगे विरचितपद!

इसका यह अर्थ हुआ कि उस गेय मेंप्रयुक्त पदों को मर्मस्पर्शी होना चाहिये। (गेय अथवा गीत की) यह विरचितपदता राजमहिषी हंसपदिका के गीताक्षरों में देखी जा सकती है-

हे मधुकर! नूतन मधु के लोभी हो तुम जो कि आम्रमञ्जरी का उस आसक्ति के साथ परिचुम्बन (रसपान) कर अब (विना मधुपान के) कमल-वन में निवासमात्र से सन्तुष्ट होकर इसे भला क्यों भूल बैठे हो?

यहाँ शकुन्तला में आसक्त हृदय वाले तथा उससे पूर्व अपनी यौवन-माधुरी का उपभोग करने वाले दुष्यन्त के प्रति हंसपदिका का उलाहना प्रकट

हुआ है जो कि निश्चित रूप से अत्यन्त मार्मिक है–मर्मस्पर्शी पदों का प्रयोग होने के कारण। इस सन्दर्भ में सहृदय जन ही प्रमाण हैं। अधिक विस्तार करने का लाभ नहीं।

मृच्छकटिक प्रकरण में भी रेभिल के गायन की प्रशंसा करते हुए नायक चारुदत्त गीत की विशेषताओं को गिनाता है। उदाहरणार्थ–

(रेभिल का गायन) रक्त (सुरीला) मधुर (मिठास भरा) सम (कर्णसुखद) स्फुट (स्पष्ट आशय वाला) संवेदनाओं से ओत-प्रोत, ललित एवं हृदयावर्जक था। अब मेरे द्वारा कहे गये अतिशय प्रशंसा-वचनों से क्या लाभ? मैं तो ऐसा मानता हूँ मानो उसके कण्ठ में कोई वनिता (गायिका) ही प्रतिष्ठित हो गई थी।– मृच्छ० ३।४

**गीतभेद का निरूपण ( शास्त्रीयगीत-लोकगीत )**

कर्ण-कुहरों के लिये जो गीत अमृततुल्य होता है वह धातु एवं मातु से समन्वित होकर नादात्मक एवं अक्षरात्मक-इन दो रूपों में विभक्त है।।१३।।

धातुज गीत उसे कहते हैं जो वेणु तथा वीणा आदि यंत्र-समूह से प्रस्फुटित होता है। मातुज गीत को मुखज अर्थात् मुँह से कढने वाला भी कहते हैं जो कि गायन के रूप में विद्यमान है।।१४।।

यही गीत जब शास्त्र-सम्मत रागों (भैरवी, केदार, धनाश्री आदि) के माध्यम से गाया जाता है तो उस प्रकार के गीतों का काव्य रागकाव्य कहा जाता है।।१५।।

और जो गीत स्वतंत्र रीति से सम्प्राप्त कण्ठध्वनि के अनुसार सुखपूर्वक तथा जनपद, ग्राम, कुल, जाति की परम्परा के अनुसार गाया जाता है।।१६।।

**तच्च सद्योरसानन्ददायकं गतबन्धनम्।**
**शास्त्रनियमनिर्मुक्तं लोकगीतं समुच्यते।।१७।।**

**रागकाव्यगता रागा यथा गान्धर्वसम्मताः।**
**तथैव लोकगीतानां रागा लोकानुमोदिताः।।१८।।**

**लोकगीतमपि स्वैरं शास्त्ररागेण गीयते।**
**शास्त्ररागाश्रितं गीतं लोकरागैस्तथैव च।।१९।।**

**सर्वमेतद्धि गान्धर्वविद्याकुशलकौशलम्।**
**लोकशास्त्रोभयोत्तीर्णो यद्यसौ भवति ध्रुवम्।।२०।।**

प्रमाणं लोकगीतानां लोक एव हि केवलम्।
यथावदङ्गीकर्तव्यं ततस्तद्धि यथास्थितम्।।२१।।

धातुजमेव यन्त्रजम्। तच्च चतुर्विधं प्रोक्तं प्राक्तनग्रन्थेषु। तद्यथामरकोषे-

ततं वीणादिकं वाद्यमानद्धं मुरजादिकम्।
वंशादिकं तु सुषिरं कांस्यतालादिकं घनम्।
चतुर्विधमिदं वाद्यं वादित्रातोद्यनामकम्।।

यथा वा भरतप्रणीते नाट्यशास्त्रे-

ततं चैवावनद्धं च घनं सुषिरमेव च।
चतुर्विधं तु विज्ञेयमातोद्यं लक्षणान्वितम्।।
ततं तन्त्रीकृतं ज्ञेयवनद्धं तु पौष्करम्।
घनं तालस्तु विज्ञेयः सुषिरो वंश एव च।।

संगीतशास्त्रीय नियमों से विनिर्मुक्त, किसी भी प्रकार के बन्धन (बन्दिश) से परे, तत्क्षण रस एवं आनन्द से सराबोर कर देने वाला वही लोकगीत कहा जाता है।।१७।।

जैसे रागकाव्य में प्रयुक्त राग-समूह संगीतशास्त्र-सम्मत होते हैं ठीक उसी प्रकार लोकगीतों के भी राग लोक-सम्मत होते हैं।।१८।।

(यह बात और है कि) लोकगीत को भी स्वेच्छापूर्वक किसी शास्त्रीयराग पर गाया जा सकता है और उसी प्रकार शास्त्रीयरागाश्रित किसी गीत को लोकरागों पर भी गाया जा सकता है।।१९।।

यह सबका सब संगीतशास्त्र में प्रवीण (गायक) का कौशल मात्र है बशर्ते कि वह निश्चित रूप से लोकगीतों तथा शास्त्रीयगीतों की परम्परा में समानरूप से उत्तीर्ण हो।।२०।।

लोकगीतों का प्रमाण इसलिये एकमात्र लोक (Folk) को ही यथावत् स्वीकार किया जाना चाहिये जिस किसी भी रूप में वह विद्यमान हो।।२१।।

धातुज को ही यन्त्रज भी कहते हैं। वह प्राचीन ग्रंथों में चार प्रकार का बताया गया है। जैसा कि अमरकोष में-

वीणा इत्यादि (तंत्रवाद्यों को) को तत, मुरज (मृदंग) आदि को आनद्ध (कसा जाने वाला) वंशी आदि को सुषिर (छिद्रयुक्त) तथा कांस्यताल आदि

को घन (ताडित होने वाला) कहते हैं। इस प्रकार वादित्र एवं आतोद्य नामक यह वाद्य चार प्रकार का होता है।

अथवा जैसे आचार्य भरत-प्रणीत नाट्यशास्त्र में-

तत, अवनद्ध, घन तथा सुषिर-ये चार प्रकार के आतोद्य होते हैं जिनके पृथक् लक्षण हैं। तंत्रियों (तारों) से निर्मित (वाद्य)तत कहा जाता है। पौष्कर (नगाड़े) आदि को अवनद्ध कहते हैं। ताल को घन जानना चाहिये तथा वंश को सुषिर।

मातुजमेव मुखजमपि स्मृतम्। तदेव गानरूपेण स्थितम्।

रागकाव्यं तावद् विविधैः शास्त्रोक्तरागैर्गीयमानं गीतसङ्कलनभूतं काव्यम्। रागकाव्यमधिकृत्य भणत्यभिनवगुप्तपादाचार्योऽभिनवभारत्याम्-

राघवविजयमारीचवधादिकं रागकाव्यम्-.... तथा हि राघवविजयस्य हि ढक्करागेणैव विचित्रवर्णनीयत्वेन निर्वाहः। मारीचवधस्य ककुभग्रामरागेणैव। अतएव रागकाव्यान्युच्यन्त एतानि। अभि० अ० ४

सम्प्रत्युपलब्धं रागकाव्यस्य प्रथमोदाहरणं जयदेवप्रणीतं गीतगोविन्दम्। तत्परम्परायामेव विद्यन्ते ताललयाश्रितानि गीतगिरीश-गीतगौरीश-गीतपीतवसन-गीतगङ्गाधर-रामगीतगोविन्दादीनि रागकाव्यानि। रागकाव्येष्वेषु ध्रुवकप्रयोगोऽनिवार्यः। यथोक्तं रागार्णवे-

न विवेको विना ज्ञानं ध्यानं नात्र रसं विना।
श्रद्धया न विना दानं न गानं ध्रुवकं विना।।

नव्यो हि राधावल्लभो लक्षयति रागकाव्यम्-

विविधै रागैर्गेयं ध्रुवकान्वितगीतिसंयुतं रागकाव्यम्( अभि० ३।१।६) तद्रोचते मह्यमपि । द्विवेदी रहसविहार्यपि तुल्यमेव भणति-

रागलक्षणसंयुक्तं गेयं गीतं ध्रुवान्वितम् ।
एकस्मिन् विषये रागे गीतानां तु समुच्चयः।।

अथ लोकगीतप्रकरणम्।

लोकेन सङ्गीतशास्त्रज्ञानविरहितेन प्राकृतजनेन गीतं लोकगीतम्। यद्वा लोकानां ग्रामग्रामटिकाग्रहाराणां गीतं लोकगीतम्। किमस्य लोकगीतत्वमिति सम्प्रत्युच्यते-यदिदं गीतं यथाजनपदग्रामकुलजातिपरम्परं

किञ्च, यथाकण्ठं यथासुखं गीयते। तत्र जनपदोदाहरणं यथा रसिकाख्यं लोकगीतं व्रजेष्वेव गीयते न तावत्कोसलेषु। बाउलगीतं बङ्गेष्वेव, पण्डवानीगीतं महाकोसलेष्वेव, रागिणीगीतं हरियाणाक्षेत्रेष्वेव, सूतगृह-नक्तक-प्रचरण-वटुक-स्कन्धहारीय-चैत्रक-फाल्गुनिकादीनि उत्तर-प्रदेशेष्वेव, दण्डरासकगीतं ( डाँडियेति भाषायाम् ) गुर्जरेष्वेव, अभङ्गाख्यं गीतं महाराष्ट्रेष्वेव गीयन्ते। कुलजातिपरम्परापराणि गीतान्यपि मिथो भिद्यन्ते। उत्तरभारते आभीर-नापित-कुम्भकार-रजकादीनां पृथग्जातीय-गीतानि भवन्ति।

मातुज को ही मुखज भी कहा गया है। वही गान के रूप में प्रतिष्ठित है।

रागकाव्य विविध संगीतशास्त्रीय रागों से गाये जाने वाले गीतों का संकलनभूत काव्य है। रागकाव्य के विषय में आचार्य अभिनवगुप्तपाद ने (नाट्यशास्त्र की अपनी टीका) अभिनवभारती में लिखा है-

राघवविजय तथा मारीचवध आदि रागकाव्य हैं...। जैसा कि राघवविजय में ढक्कराग के माध्यम से ही विलक्षण वर्णनीयता का निर्वाह मिलता है। मारीचवध में भी ककुभराग के द्वारा। इसीलिये इनको रागकाव्य कहते हैं।-अभिनव० अ० ४

वर्तमान युग में उपलब्ध रागकाव्य का प्रथम निदर्शन है जयदेव-प्रणीत गीतगोविन्दम्। उसी परम्परा में आते हैं ताल और लय पर आश्रित गीतगिरीशम्, गीतगौरीशम्, गीतपीतवसनम्, गीतगङ्गाधरम्, गीतरामगोविन्दम् आदि।

इन समस्त रागकाव्यों में ध्रुवक का प्रयोग अनिवार्य है। जैसा कि रागार्णव में कहा गया है-ज्ञान के अभाव में विवेक, रस (तन्मयता) के अभाव में ध्यान, श्रद्धा के अभाव में दान तथा ध्रुवक के अभाव में गान संभव नहीं होता।

नये काव्यशास्त्री राधावल्लभ रागकाव्य को परिभाषित करते हैं-

विविध शास्त्रीय रागों द्वारा गेय, ध्रुवक से त्रन्वित गीतों के संकलन को रागकाव्य कहते हैं।-अभिनव० अ० ४

यह लक्षण मुझे भी पसन्द है। रहसविहारीद्विवेदी भी कुछ ऐसी ही बात कहते हैं-ध्रुवक से अन्वित, रागों के लक्षण से युक्त जो गीत गेय हों, ऐसे गीतों का जहाँ एक ही विषय अथवा राग में संकलन हो, उसे रागकाव्य कहते हैं।

अब **लोकगीत** का प्रकरण-

लोक के द्वारा अर्थात् संगीतशास्त्र के ज्ञान से विरहित सामान्य जनों (ग्रामवासियों) द्वारा गाया जाने वाला (गीत) **लोकगीत** (Folk Song) है। अथवा लोक का (जवार अथवा गाँव-गिराँव-पुरवे) का गीत लोकगीत है। इसका लोकगीतत्व क्या है? अब इसे बताया जा रहा है-

चूँकि यह गीत जनपद, गाँव, कुल तथा स्वजातीय परम्परा के अनुसार, कण्ठध्वनि-वैशिष्ट्य के साथ, स्वाभाविक पद्धति से गाया जाता है (इसीलिये) इसे लोकगीत कहते हैं।

जनपद का उदाहरण जैसे **रसिक** (रसिया) नामक लोकगीत व्रजक्षेत्र (मथुरा-वृन्दावन) में ही गाया जाता है न कि कोसल क्षेत्र में। **बाउल** गीत बंगाल में ही, **पण्डवानी** गीत महाकोसल (छत्तीसगढ़) में ही, **रागिणी** गीत हरियाणा इलाके में ही, सूतगृह (सोहर) नत्तक (नकटा) प्रचरण (पचरा) वटुक (बरुआ) स्कन्धहारीय (कहँरवा) चैत्रक (चैता) फाल्गुनिक (फाग) आदि उत्तरप्रदेश में ही, **दण्डरासकगीत** (जनभाषा में डाँडिया रास) गुजरात में ही, तथा **अभंग** नामक गीत महाराष्ट्र क्षेत्र में ही गाया जाता है।

कुल, जाति की परम्परा वाले (लोक) गीत भी एक-दूसरे से भिन्न होते हैं। उत्तर भारत में आभीर (अहीर) नापित (नाई) कुम्भकार (कुम्हार) तथा रजकादि (धोबियों) के पृथक्-पृथक् जातीय गीत होते हैं।

**ऋतूनामागमं पर्व गृहमङ्गलमुत्सवम्।**
**धर्मसंस्कृतिरीतिं वा लोकगीतं समञ्चति।।२२।।**

**अथ कजरीगीतम्-**

**कोसलेषु च काशीसु गीयते हि घनागमे।**
**गीतिका कजरीनाम्नी नैकरागसमाश्रिता।।२३।।**

**वियोगिन्या हि गीतेऽस्मिन् प्रोषितं नायकं प्रति।**
**उपालम्भाः प्रदीयन्ते विस्मृतिक्षोभकारकाः।।२४।।**

**कं पतिसाहचर्यजनितं सुखं जरयतीति भावबोधिनी गीतिः कजरीति मया व्याख्यातं स्वोपज्ञायां वाग्वधूट्याम्। घनागम एव गीयत इत्युपलक्षणम्। नैकरागसमाश्रितेति सोदाहरणं निरूपयिष्यते।**

**तत्र प्रथमरागाश्रितमुदाहरणं यथा मम वाग्वधूट्याम्-**

**रौति कोकिला मदालसा रसालतरौ**
**गोपिता तमालतरौ रे!**
**क्वचित्पल्लवे निलीय, मञ्जरीरसं निपीय**
**स्तौति सम्मुखं वसन्तकं रसालतरौ**
**गोपिता तमालतरौ रे!!**

लोकगीत (प्रायः) नूतन ऋतुओं की अगवानी, पर्व (तीज-त्योहार) घरेलू मंगल एवं उत्सव अथवा धर्म-संस्कृति एवं रीति-रिवाज के उपलक्ष्य में गाये जाते हैं।।२२।।

**कजरी गीत-**

पावस ऋतु आने पर (सावन-भादों के महीनों में) कोसल एवं काशी क्षेत्र में, अनेक रागों पर आश्रित कजरी नामक लोकगीत गाया जाता है।।२३।।

परदेशी नायक के प्रति विरहिणी नायिका के उलाहने इस गीत में अभिव्यक्त होते हैं जो कि नायक की विस्मृतिशीलता के प्रति (नायिका के) क्षोभ को प्रकट करते हैं।।२४।।

'कम्' अर्थात् पति-साहचर्यजनित (रति) सुख को नष्ट करने वाली, वियोगभाव का बोध कराने वाली गीति कजरी है ऐसी व्याख्या मैंने अपनी (पूर्वप्रकाशित) कृति वाग्वधूटी में की है। वर्षाऋतु में ही कजरी गाई जाती है, यह उपलक्षण-मात्र है(अन्यथा कभी भी गाई जा सकती है)।

अनेक रागों (लयों) पर समाश्रित होती है (कजरी) इसका (अब) सोदाहरण निरूपण किया जायेगा।

उनमें प्रथम राग पर आधारित उदाहरण जैसे मेरी वाग्वधूटी में-

मद में अलसाई तथा तमाल की शाखाओं में छिपी-बैठी कोकिला आम के पेड़ पर कूक रही है।

कभी आम्रपल्लवों में छिप कर, मञ्जरियों का रसपान करती, चौतरफा पसरे वसन्त का मानो अभिनन्दन कर रही है।

**द्वितीयरागाश्रितमुदाहरणं यथा तत्रैव वाग्वधूट्याम्-**

**राधा वादयति मुरलीमये! माधव!**
**राधा वादयति मुरलीमये! माधव!!**

रासमण्डलस्मृतेन
काऽपि गोपिका करेण
धीरा धारयति मुरलीमये माधव!!

तृतीयरागाश्रितमुदाहरणं यथा मम मृद्वीकायाम्-

व्यालीव दशति धनरजनी
दयितो नन्दनन्दनो न सदने!
नदति निशीथे पापी विपिने कलापी
भयमेति गृहे विधुवदनी
दयितो नन्दनन्दनो न सदने!!

चतुर्थरागाश्रितमुदाहरणं यथा तत्रैव मृद्वीकायाम्-

लघु लघु जलद! सलिलमभिवर्षय
हर्षय जगदविरामं रे!
घोरं शब्दय शतशतवारम्
विस्फूर्जय नादय परिवारम्
बहु बहु वितर सुधामभिलषितां
नन्दय सकृदभिरामं रे!!

द्वितीय रागाश्रित उदाहरण भी वहीं वाग्वधूटी में ही-

हे माधव! वृषभानुनन्दिनी राधिका (तुम्हारी) मुरली बजा रही हैं। राधा वंशी बजा रही है माधव!

रासोत्सव की स्मृति आ जाने के कारण, धीरभाव से राधा (तुम्हारी) मुरली ग्रहण कर लेती है माधव!

तृतीय राग पर आश्रित (कजरी का) उदाहरण जैसे मेरी मृद्वीका में-

काली रात साँपिन की तरह डँस रही है (परन्तु) प्रियतम नन्दनन्दन भवन में नहीं हैं।

आधीरात के समय पापी कलापी (मोर) वन में कुहक रहा है (जिसे सुन कर) चन्द्रमुखी नायिका (सूने) घर में भयभीत हो रही है। प्रियतम नन्दनन्दन भवन में नहीं हैं।

चतुर्थ राग पर आश्रित उदाहरण जैसे वहीं मृद्वीका में ही-

हे मेघ! जल्दी-जल्दी पानी बरसो और संसार को जीभरकर हर्षित कर दो। गरजो जोर-जोर से सैकड़ों बार, मचाओ धमाचौकड़ी और अपने संगी-साथियों से भी शोर मचवाओ। अपार मात्रा में (जनता के) मनचाहे अमृत का वितरण करो और एक बार सज-धज के साथ धरती को खुश कर दो।

पञ्चमरागाश्रितमुदाहरणं यथा मृद्वीकायामेव-

सखि रे! समागच्छति श्रावणमास उदारोऽयं
संवर्धयत्यनङ्गं मानसे!
चित्तं चोरयते ननु चन्द्रः
मेघो भीषयते ननु मन्द्रः
सखि रे! स्फुरति दामिनी गगने कृताभिसारेयं
संवर्धयत्यनङ्गं मानसे!!

षष्ठरागाश्रितमुदाहरणमपि मृद्वीकायामेव-

रिमझिम् वर्षति सजलजलधरो
नृत्यति केकी कानने!
गर्जति धावति नदति च कूर्दति
तारापथे पयोदो बाले!
अयि भोः शिशुरिव नटति जलधरो
नृत्यति केकी कानने!!

सप्तमरागाश्रितमुदाहरणं यथा ममैव वाग्वधूट्याम्-

नन्दनन्दनेन गोकुलं निकेतनीकृतम!
इतस्ततः परिलुठन् धूलिधूसरीभवन्।
क्वचिन्नृत्यति प्रगायति स्वमन्दिरे द्रुतम्!!

पञ्चमरागाश्रित उदाहरण जैसे (मेरी कृति) मृद्वीका में ही-

हे सखि! यह मनभावन सावन का महीना आ गया है और मन में कामभावना को अंकुरित करने लगा है।

चन्द्रमा भी तो मन को चुराने लगा है (अपनी लुका-छिपी से) और मन्द-मन्द गरजता मेघ भयभीत करने लगा है।

हे सखि! (मेघरूपी नायक के साथ) अभिसार करने वाली यह दामिनी भी अम्बर में कौंधने लगी है। मन में काम जागृत हो रहा है।

अब पुनः पददलित करता कोई रथ इधर न आ निकले ऐसा सोच कर ही मैने मार्ग में (अवरोधरूप में) खड़ी कर दी है लेखनी!

किसी कुबेर की वशवर्तिनी नहीं है (क्योंकि) रामगिरि-आश्रम में प्रवास कर चुकी है (मेरी वह) लेखनी।

ईश्वर के आदेश का भी विरोध करने वाली घोषित कर दी गई है मानव-कोटिक ऐहिक-कवि की यह लेखनी।

**२२ मात्राओं** की ग़ज़ल जैसे जगन्नाथ पाठक की **पिपासा** में-

ओफ् कोई भी मेरे साथ सर्वत्र नहीं गया। पूर्ण प्रयत्न के बावजूद किसी को मैने 'अपना' नहीं पाया।

अकेलेपन में, व्यक्ति के ये दिन नहीं बीत पाते। फिर भी मैने यूँ ही (इसी स्थिति में) अपने दिन काट दिये।

उनके दुःखों का कारण यद्यपि मैं ही हूँ फिर भी (अपनी जान) मैने किसी व्यक्ति को दुखी नहीं बनाया।

समझा तो मैने सबको आत्मीय (अपना) फिर भी नहीं सुना मैने कि कोई व्यक्ति 'मेरा अपना' है।

**त्रयोविंशातिमात्रा गलजजलिका यथा मणेर्जनादनप्रसादपाण्डेयस्य-**

**केवलं श्रोत्रविनोदं विचिन्त्य सत्कुरुषे।**
**गीतिका तेऽस्मि शताब्द्या न पक्ष्मभिश्श्रिनुषे।।**
**कृष्ण गीताऽपि वृता हा! त्वयाऽनृते शपथे।**
**गोखुराङ्कस्थजलाब्धौ निपत्य न म्रियसे।।**
**राजनीतेस्तु महापङ्किले विलासरसे।**
**प्राप्तनिर्वाणसुखस्त्वं प्रभुं न चेतयसे।।**

**२३ मात्राओं** की गजल जैसे जनार्दनप्रसाद पाण्डेय मणि की-केवल कर्णसुख के विचार से वाहवाही कर रहे हो? अरे, मै तुम्हारी शताब्दी की गीतिका हूँ (फिर भी) मुझे आत्मसात् नही कर रहे हो।

हाय! कृष्ण की गीता को भी तुमने झूठी कसम खाने के लिये उठा ही लिया! अरे, चिल्लू भर पानी मे डूब कर मर नहीं जाते!

राजनीति के महापंकिल विलास-रस में मुक्ति-सुख प्राप्त करते हुए तुम परमेश्वर प्रभु का स्मरण नही कर रहे!

चतुर्विंशतिमात्रा गलज्जलिका यथा ममैव मृद्वीकायाम्-

लोकानुरागमूलं लोकाभिशापशूलं
शीर्षे निधाय सर्वं जीवामि भूतलेऽहम्!!
क्वचिदपि ललाटपट्टे सौभाग्यबिन्दुरासं
दिवसा गता हि ते नो जीवामि भूतलेऽहम्!!
भवनाङ्गणे कदाचिद् दृष्टा पयोदमाला
प्रपलायिताऽप्यवृष्टिर्जीवामि भूतलेऽहम्।।
निर्मापितं न जाने केनेदमूर्ध्वहर्म्यं
मम खण्डितावशेषे जीवामि भूतलेऽहम्।।
मन्ये कृतान्तगेहे भ्रान्ताऽस्ति मृत्युबाला
यस्मादहोऽभिराजो जीवामि भूतलेऽहम्।।

अष्टाविंशतिमात्रा गलज्जलिका यथा दीक्षितपुष्पायाः-

नभःस्पर्शक्षमे शङ्खोदरश्वेते वसन् सौधे
तृणावासं मदीयं वीक्ष्य संमृद्नाति लोकोऽयम्।।
मया मूर्ध्ना नतेनास्मिन् कुटीरे यापितः कालः।
तथाप्याहृत्य तालं योद्धमग्रे याति लोकोऽयम्।।
असह्यं वेदनं सूते स्वदेहे कण्टकस्याग्रं
शरीरं मे शराकीर्णं क्रमित्वा याति लोकोऽयम्।।
न सूपे सम्प्लुता दर्वी रसं सूपस्य जानीते
वसंल्लोके व्यथां लोकस्य नो जानाति लोकोऽयम्।।

२४ मात्राओं की गज़ल जैसे मेरी ही मृद्वीका में-

लोकानुराग का मूल और लोकाभिशाप का शूल! सब को सिरमाथे लगाकर धरती पर जी रहा हूँ मैं!

कभी मैं भी किसी के ललाटपट्ट पर उभरा सौभाग्य-तिलक था! परन्तु खो गये मेरे वे दिन (और) जी रहा हूँ धरती पर मैं!

अपने घर की अँगनाई में भी मैने कभी देखी थी घनघटा। परन्तु गल गई वह बिना बरसे ही (और) जी रहा हूँ धरती पर मैं!

मेरे खँडहरों के ऊपर न जाने किसने बनवा ली है यह गगनचुम्बी इमारत (और) जी रहा हूँ धरती पर मैं!

मैं तो समझता हूँ कि मृत्युरूपी बाला यम के भवन में कहीं रास्ता भटक गई है जिसके परिणाम-स्वरूप मैं अभिराज जी रहा हूँ धरती पर!

**२८ मात्राओं** की ग़ज़ल जैसे पुष्पा दीक्षित की-

शंख के समान लकदक गगनचुम्बी महल में रहते हुए भी समाज मेरी घास-फूस की झोपड़ी देख तिलमिलाता है।

मैने तो सिर झुकाकर ही इस कुटीर में (अपनी) ज़िन्दगी काट ली फिर भी यह समाज ताल ठोंक कर (मुझसे) लड़ने के लिये अग्रसर होता रहा है।

काँटे की नोक अपनी देह में असह्य पीड़ा पैदा करती है, फिर भी तीरों से छलनी हुई मेरी देह को लाँघ कर जाता रहा है यह समाज।

जो करछुल दाल की बटलोई में घुसी नहीं वह दाल का स्वाद क्या जानेगी? फिर भी, समाज में ही रहता हुआ यह समाज, समाज की व्यथा को नहीं जानता।

**अष्टाविंशतिमात्रा गलज्जलिका यथा प्रणवोपाह्वस्य इच्छारामद्विवेदस्य-**

**धनुस्ते कीदृशं कियदद्भुतं बन्धो! कथं जाने?**
**विना नाराचसन्धानं व्रणं कुरुते कथं जाने?**
**मया शास्त्रे श्रुतं मन्दस्मितैर्नन्दन्ति सत्पुरुषाः**
**मनो मे दूयते ते सुस्मितैर्बन्धो! कथं जाने?**
**कटाक्षैस्ते विचित्रैरीदृशं सम्पादितं कृत्यम्**
**जडीभूतं मनो मे चञ्चलं बन्धो! कथं जाने??**

**२८ मात्रा** की (ही) गजल जैसे इच्छाराम द्विवेदी 'प्रणव' की। बन्धु! तुम्हारा धनुष कैसा है, कितना अद्भुत है-भला कैसे जानूँ! बिना शरसन्धान के ही घाव कर देता है, कैसे जानूँ। शास्त्रो में सुना है कि मन्द मुस्कान से सज्जन बाग-बाग हो उठते हैं। परन्तु तुम्हारी तो हसीन मुस्कानो से भी मेरा कलेजा बैठ जाता है।

तुम्हारे विचित्र कटाक्षों ने कुछ ऐसा काम कर डाला कि मेरा घुड़दौड़ करता मन अड़ियल बन गया है यह (रहस्य) कैसे जानूँ?

**द्वात्रिंशन्मात्रा गलज्जलिका यथा भट्टमथुरानाथशास्त्रिवर्याणाम्-**

**अयि चित्त! चिरेण विचिन्तयतोऽपि च चञ्चलता न गता न गता**
**अपि नाम निरन्तरयत्नशतैस्तव निष्ठुरता न गता, न गता।।**

अभिनन्दसि शास्त्रगतं न मतं नहि विन्दसि सन्ततमात्महितम्
बत निन्दसि लोकमतं विमतं तव मत्सरता न गता, न गता।।

यथा वा ममैव मत्तवारण्याम्-

कीदृशमहो विलक्षणलोचनयुगलं मञ्जुलमतनुत मीरा
अभितः परितो येन सन्ततं दयितमुकुन्दमपश्यन्मीरा।।
पिटकपरीतं दारुणफणिनं प्रेषितवान् रोषोद्धुरराणा
माधवरागनिमग्नमानसा शालग्राममपद्यत मीरा।।

अथच्छन्दोमुक्तकाव्यप्रकरणम्-

छन्दः पादौ तु वेदस्येत्युचितं प्राहुरागमाः।
छन्दसैव हि काव्यस्य कथायात्रा प्रवर्तते।।९२।।

छन्दस्तद् द्विविधं ख्यातं वार्णिकं मात्रिकं तथा।
वार्णिकं त्रिविधं भूयोऽदस्समाऽर्धसमाऽसमैः।।९३।।

वार्णिकं गण्यते वर्णैर्मात्राभिश्चापि मात्रिकम्।
सर्वज्ञेयं हि तच्छन्दो लक्षणाश्रयि यत्पुनः।।९४।।

३२ मात्राओं की ग़ज़ल जैसे भट्ट मथुरानाथशास्त्री की-

चिरकाल से ही चिन्तन करते रहने पर भी हे मेरे मन! तेरी चंचलता नहीं, गई, नहीं गई। निरन्तर सैकड़ों उपाय करते रहने पर भी तेरी निष्ठुरता नहीं गई, नहीं गई।

शास्त्रानुमोदित मन्तव्य का तुम अभिनन्दन नहीं करते, निरन्तर अपने कल्याण की बात तुम नहीं सोचते। खेद है कि अपने को पसन्द न लगने वाले लोकमत की तुम निन्दा करते हो। तुम्हारी मत्सरता (ईर्ष्या-द्वेष की भावना) न गई, न गई।

अथवा (दूसरा उदाहरण) मेरी ही मत्तवारणी में-

आश्चर्य है, देवी मीराबाई ने कैसा विलक्षण पावन नेत्रयुगल प्राप्त कर लिया था जिससे उन्होंने निरन्तर अपने दायें-बायें, चारों ओर प्रियतम मुकुन्द का दर्शन किया।

क्रोध में अन्धे हुए राणा ने पिटारी में बन्द करके दारुण नाग को भेजा। (परन्तु) माधव के अनुराग में डूबी चित्तवृत्ति वाली मीरा ने (उस पिटारी में भी) शालग्राम को प्राप्त कर लिया।

अब छन्दोमुक्त काव्य का प्रकरण–

आगमों में यह उचित ही कहा गया है कि छन्द वेद (पुरुष) के चरणयुगल हैं (क्योंकि) छन्दों के ही सहारे काव्य की कथायात्रा विकसित होती है।।९२।।

वह छन्द दो प्रकार का बताया गया है–वार्णिक तथा मात्रिक। वार्णिक छन्द पुनः तीन प्रकार का होता है–सम, अर्धसम और असम (विषम) भेदों के कारण।।९३।।

वार्णिक छन्द में (गण) वर्णों द्वारा गिना जाता है (जबकि) मात्रिक छन्द में मात्राओं द्वारा। इस प्रकार का वह छन्द सर्वज्ञेय होता है। लक्षणों पर आश्रित होने के कारण।।९४।।

वार्णिकमात्रिकाभ्यां हि किन्तु तद्वै विलक्षणम्।
छन्दस्त्वं यत्प्रतिशब्दं तिष्ठत्येव निसर्गतः।।९५।।

छन्दस्त्वं गद्यबन्धेऽपि बुधास्तस्माद्धि मन्वते।
वार्णिकं मात्रिकं वापि काममेव न तद्भवेत्।।९६।।

छन्दोमुक्तं किमप्येव वाङ्मये नहि विद्यते।
वस्तुतः परमार्थोऽयं प्रतिषेद्धुं न शक्यते।।९७।।

एवम्भूतेऽपि यत्काव्यं वर्णमात्रागणक्रमैः।
न प्रणीतं, तदेवाद्यच्छन्दोमुक्तं समुच्यते।।९८।।

काव्यसृष्टिप्रयोज्यत्वान्मनः प्रीत्यैसचेतसाम्।
छन्दोमुक्तं हि तत्काव्यं सोदाहरणमुच्यते।।९९।।

छन्दः पादौ तु वेदस्येति पाणिनीयशिक्षा। यथा कश्चिज्जनः पादाभ्यामेव यात्रां सम्पादयति तथैव काव्यपुरुषोऽपि शब्दार्थपादाभ्यां स्वकथायात्रां निर्वर्तयति। तच्चच्छन्दो द्विविधं वार्णिकं मात्रिकञ्चेति। वार्णिकं भवति चतुष्पादात्मकम्। तच्च त्र्यक्षरात्मकैरष्टगणैर्लिख्यते। ते च गणाः–

मस्त्रिगुरुस्त्रिलघुश्च नकारो भादिगुरुः पुनरादिलघुर्यः।
जो गुरुमध्यगतो रलमध्यः सोऽन्तगुरुः कथितोऽन्तलघुस्तः।।

यथा वा–

आदिमध्यावसानेषु भजसा यान्ति गौरवम्।
यरता लाघवं यान्ति मनौ तु गुरुलाघवम्।।

परन्तु वार्णिक एवं मात्रिक छन्दों से भी विलक्षण एक छन्दोमयता प्रत्येक शब्द में निसर्ग से ही विद्यमान रहती है।।९५।।

इसीलिये विद्वज्जन गद्यबन्ध में भी छन्दस्त्व स्वीकार करते हैं भले ही गद्यबन्ध वार्णिक अथवा मात्रिक गणों से युक्त नहीं होता है।।९६।।

(इस प्रकार) वाङ्मय में कुछ भी ऐसा नहीं है जो (सर्वथा) छन्दोमुक्त हो। वस्तुतः इस परमार्थ (सचाई) का अपलाप नहीं किया जा सकता।।९७।।

ऐसा होने पर भी जो काव्य वार्णिक अथवा मात्रिकगणों द्वारा प्रणीत न किया गया हो उसी को आज छन्दोमुक्त काव्य कहते हैं।।९८।।

काव्यरचना में प्रयोज्य होने के कारण, सहृदयों की मनःप्रीति के लिये वह छन्दोमुक्त काव्य सोदाहरण निरूपित किया जा रहा है।।९९।।

छन्द है वेद का चरण ऐसा पाणिनीय शिक्षा में कहा गया है। जैसे कोई व्यक्ति दो पैरों से ही यात्रा सम्पन्न करता है उसी प्रकार काव्यपुरुष भी शब्द एवं अर्थरूपी चरण-युगल द्वारा ही अपनी कथारूपी यात्रा को सम्पन्न करता है। वह छन्द दो प्रकार का होता है-वार्णिक और मात्रिक। वार्णिक छन्द होता है चार चरणों वाला। वह तीन अक्षरों वाले आठ गणों द्वारा लिखा जाता है। वे गण हैं-

**मगण** जिसमें तीनो अक्षर गुरु होते हैं। **नगण** जिसमें तीनो अक्षर लघु होते हैं। **भगण** जिसमें आद्यक्षर गुरु होता है। **यगण** जिसमें आद्यक्षर लघु होता है। **जगण** जिसमें मध्याक्षर गुरु होता है। **रगण** जिसमें मध्याक्षर लघु होता है। **सगण** जिसमें अन्त्याक्षर गुरु होता है और **तगण** जिसमें अन्त्याक्षर लघु होता है।

अथवा (दूसरा लक्षण) भगण-जगण तथा सगण क्रमशः आदि, मध्य तथा अन्त्य स्थानों पर गुरुता को प्राप्त करते हैं (इसी प्रकार) यगण-रगण तथा तगण (क्रमशः आदि, मध्य एवं अन्त में) लघुता को प्राप्त करते हैं। मगण में तीनो गुरु तथा नगण में तीनो लघु अक्षर होते हैं।

**वार्णिकमपिच्छन्दस्त्रिविधं भवति समाऽर्धसमविषमभेदैः। मात्रिकं छन्दश्चतुर्मात्रात्मकैर्गणैर्व्यवस्थाप्यते यथाऽऽर्यागीत्यादीनि।**

**अलन्तावद्वार्णिकमात्रिकच्छन्दोभ्याम्। प्रतिशब्दं किञ्चिन्नैसर्गिकं छन्दस्तिष्ठतीति नाट्यशास्त्रकारो भरतः। स आह-**

**छन्दोहीनो न शब्दोऽस्ति न च्छन्दः शब्दवर्जितम्।**
**तस्मात्तूभयसंयुक्ते नाट्यस्योद्योतके स्मृते।।-नाट्य० १४।४०**

**तस्माद् गद्येऽपि तिष्ठत्येव किञ्चित्स्वाभाविकं छन्दस्त्वमित्यङ्गीकार्यम्। अयमेव परमार्थः। एवं व्यवस्थिते सति कोऽयं छन्दोमुक्तकाव्यप्रस्ताव इति पृच्छायां समुच्यते यद् वर्णमात्रागणक्रमैरप्रणीतमेव काव्य-मुपचारतश्छन्दोमुक्तमुच्यते।**

**तदेवं छन्दोमुक्तं गद्यमेवेति चेदुच्येत तन्न। गद्यं तावत्पद्यप्रतियोगि काव्याभिधानम्। छन्दोमुक्तं तावद् गद्यपद्योभयगुणसंवलितं विशिष्टमेव वाग्वस्तु। छन्दसामप्रयोगाद्गद्यनिर्विशेषमिदम्। छन्दोगुणोपस्थितिवशात्पद्य-निर्विशेषमपीदम्। एवं हि गद्यपद्योभयरसायनसम्भृतं छन्दोमुक्तमित्यभिराज-सम्मतम्। किञ्च-**

**गद्यपद्योभयात्मेदं छन्दोमुक्तं हि वाङ्मयम्।**
**पद्यात्मकलयेनैव यद्धि गद्येन लिख्यते।।१००।।**

**वार्णिक** छन्द भी तीन प्रकार का होता है-सम, अर्धसम एवं विषम भेदों के कारण। **मात्रिक** छन्द की व्यवस्था चार मात्राओं वाले गणों द्वारा होती है जैसे आर्या एवं गीति आदि।

अब वार्णिक एवं मात्रिक छन्दों का निरूपण यहीं स्थगित करते हैं। प्रत्येक शब्द में कोई नैसर्गिक (सहजात) छन्द विद्यमान होता है, ऐसा नाट्यशास्त्रकार **आचार्य भरत** मानते हैं। उनका कहना है-कोई भी शब्द छन्दोहीन नहीं होता और न ही छन्द शब्द-वर्जित होता है। इसलिये शब्द एवं छन्द-दोनों ही समवेत रूप से नाट्य के उद्योतक माने गये हैं।-नाट्य० १४।४०

इसलिये (पद्येतर) गद्य में भी कोई स्वाभाविक छन्दोमयता विद्यमान रहती ही है ऐसा स्वीकार किया जाना चाहिये। यही परमार्थ (सत्य) है।

ऐसी स्थिति में यदि कोई पूछे कि यह छन्दोमुक्त काव्य का प्रस्ताव क्या है? तो उसका उत्तर हम देना चाहेंगे कि वार्णिक एवं मात्रिकगणों के माध्यम से न प्रणीत किये गये काव्य को ही (शब्दों में विद्यमान सहजात छन्दोमयता के कारण) उपचारतः छन्दोमुक्त (काव्य) कहा जाता है।

तो फिर, इस दृष्टि से तो छन्दोमुक्त (काव्य) गद्य ही हुआ, यदि ऐसा कोई कहे तो वैसा नहीं है (क्योंकि) क्योंकि गद्य पद्य के प्रतियोगी काव्य की संज्ञा है। परन्तु छन्दोमुक्त तो गद्य एवं पद्य-दोनों के गुणों से संवलित कोई विलक्षण ही वाग्वस्तु (अभिव्यक्ति) है। छन्दों का प्रयोग न होने के कारण

(छन्दोमुक्त) गद्य का सजातीय (गद्य जैसा) है परन्तु छन्द के गुणों (लयादि) की उपस्थिति के कारण यह पद्य का सजातीय (पद्य जैसा) भी है।

इस प्रकार, गद्य एवं पद्य दोनो के रसायन (रसवत्ता) से भरपूर होता है छन्दोमुक्त काव्य, ऐसा अभिराज का मन्तव्य है। पुनश्च,

गद्य एवं पद्य दोनो के जीवातु को धारण करने वाला होता है यह छन्दोमुक्त वाङ्मय जो कि पद्यात्मक लय के (Poetic Rhythm) द्वारा गद्य-विधा में लिखा जाता है।।१००।।

वस्तुतो लयवाहीदं गद्यमेव न चापरम्।
प्रसिद्धमाङ्ग्लभाषायां रिद्मिकप्रोज़संज्ञया।।१०१।।

प्राचीनजावीभाषायामपि गद्यं तदीदृशम्।
सुलुकं नाम गेयात्म वायाङ्गेषु महीयते।।१०२।।

तदेवं छन्दोमुक्तं परिभाषितम्। लयवाहिगद्यमेव च्छन्दोमुक्तमिति वाच्यम्। तच्च गद्यपद्योभयात्मकं भवति, गद्यपद्योभयगुणाधानत्वात्। तदेवाङ्ग्लवाचि रिद्मिकप्रोज़ ( Rhythmic Prose ) इत्युच्यते। कविभाषायां ( Old Javanese ) चापि सुलुकपदवाच्यमिदम्। वस्तुतः वायाङ्गप्रदर्शने डलङ्गाऽपरनामा सूत्रधारो लयवाहिगद्यशैल्या यामाख्यां ( commentary ) पात्रसंवादात्मिकां प्रसारयति साऽपि सुलुकगायनमित्युच्यते। वस्तुतो हिन्दुशासनसत्ताकालीनं श्लोकगायनमेव सल्तनतकाले सप्तदशशततमे ख्रिस्तशतके यवद्वीपे सुलुकगायनं सञ्जातम्।

प्रायेण सर्वाण्येतानि सुलुकगायनानि दुष्यन्तशकुन्तलाकथाद्यवलम्बीनि पाकिमाख्यनाट्यशास्त्रग्रन्थेषु पूर्वत एव लिखितानि वर्तन्ते। डलङ्गः केवलमेतानि कण्ठस्थीकृत्य यथावसरं गायन्निव प्रस्तौति। सहृदयानाम्मनोरञ्जनाय समुदाह्रियते सुलुकम्-

मंकत् लिङ् सङ् शकुन्तला सुमहुर् महाराज दुष्यन्त-कासि त्वं दुष्टतापसि? मंकत् लिङ् महाराज दुष्यन्त अनंगिस् त संग शकुन्तला सवेत् निंग ङरङ्ग ङर् मोजर्त सिर मुनह्-अत्यन्त काभिमानन्त महाराज! साक्षात् पश्यन्ति कर्माणि। सिर त तुमिङ्गल डंग व्यापाराहल-हयु समंकत त संग देवा ततन् केन हिमिमुर्-हिमुर् इति।

वस्तुतः यह (छन्दोमुक्त काव्य) लयवाही गद्य (Rhythmic Prose) ही है, कुछ और नहीं। इसी को अंग्रेजी भाषा में रिद्मिकप्रोज़ कहा जाता है।।१०१।।

प्राचीन जावी भाषा में भी इसी प्रकार के गद्य को गेय प्रकृति वाला **सुलुक** (श्लोक) कहा जाता है जो कि **वायांगों** (नाट्यों) में विशेष महत्त्व रखता है।।१०२।।

इस प्रकार **छन्दोमुक्त** को परिभाषित किया गया। लयवाही गद्य ही छन्दोमुक्त काव्य है, ऐसा कहना चाहिये। वह छन्दोमुक्त काव्य-गद्य एवं पद्य दोनों के गुणों का आधान (ग्रहण) करने के कारण गद्यपद्योभयात्मक होता है। इसी को अंग्रेजी भाषा में **रिद्मिक प्रोज** कहा जाता है। कविभाषा (जावा और बालीद्वीपों की प्राचीन भाषा) में भी इसे **सुलुक** कहा जाता है। वस्तुतः **वायांग** (नाट्य) के प्रदर्शन में **डलंग** नामक सूत्रधार लयवाही गद्यशैली में, पात्रों के संवादों से युक्त जिस आख्या को प्रसारित करता है उसे (बाली एवं जावा के समाज में) **सुलुक-गायन** ही कहा जाता है। वस्तुतः हिन्दू शासनसत्तायुगीन **श्लोक-गायन** ही सल्तनत काल में (१७, १८वीं शती ई०) यवद्वीप में **सुलुक-गायन** बन गया।

दुष्यन्त एवं शकुन्तला की कथा पर आश्रित प्रायः ये सारे के सारे **सुलुक-गायन** पाकिम नामक नाट्यशास्त्रीय ग्रंथों में पहले से ही लिखे हुए सुरक्षित हैं। डलंग, इन्हें केवल कण्ठस्थ करके, यथावसर, गाता हुआ सा प्रस्तुत करता है। सहृदयों के मनोरञ्जनार्थ (एक) सुलुक-गायन उद्धृत किया जा रहा है-

महाराज दुष्यन्त ने सकुन्तला से पूछा-दुष्ट तापसी! तू है कौन? महाराज दुष्यन्त के इस असभ्य व्यवहार को देख व्यथित होकर सकुन्तला बोली-हे राजन्! बड़ा घमण्ड हो गया है आपको? सारे देवगण जीवों के कर्मों को प्रत्यक्ष देखते हैं कि वह कब, क्या करता है!!

**तत्र प्रथमोदाहरणं त्रिपाठिनो राधावल्लभस्य सम्प्लवे-**

**पलाण्डुच्छेदने निर्गतं**
**नयनयोर्लावण्यमयं बाष्पजलम्**
**सहैव चैव विच्छुरितं**
**मधुरमधुरं स्मितं तथोष्ठयोः**
**एतद् द्वयमपि सम्मेल्य कटाहे**
**घृतेन भर्ज्यते यदा**
**उत्तिष्ठति धूमस्तदा कषायमधुरो रसवत्यां**
**देवानामावाहनं विधत्ते**

अथ हरिद्रासदृशमुज्ज्वलं रूपं धृत्वा
सौगन्ध्यकं वितन्वाना कुस्तुम्बर्याः
अवतरत्यन्नपूर्णा साक्षाद्रसवत्यामस्याम्
अन्नब्रह्म साकारयन्ती!!

द्वितीयं छन्दोमुक्तोदाहरणं के० राजन्नशास्त्रिणः। यथा-

लुब्धानां प्रीतयः
चलचित्राणां गीतयः
अपरिपक्वमतीनां नीतयः
अन्यायोपार्जितमुद्राणां स्फीतयश्चिरस्थायिन्यो न भवन्ति।
निशीथे सञ्चार
कपटपूर्णो व्यवहारः

सुहृदामत्युपचारः
विरक्तानां शृङ्गारः शङ्कनीयो भवति!!
गङ्गाजलस्य पानेन किम्
व्रतानामनुष्ठानेन किम्
स्तुतीनां गानेन किम्
तीर्थानां यातेन किं यदि भावशुद्धिर्नास्ति!!

छन्दोमुक्त का प्रथम उदाहरण राधावल्लभ त्रिपाठी की कृति सम्प्लव में द्रष्टव्य है-प्याज काटने में नेत्रों से निकला खारा आँसू और उसके साथ ही साथ होठों पर फैली मीठी-मीठी मुस्कान। इन दोनों को परस्पर मिलाकर जब कड़ाही में घी से छौंक लगाई जाती है तब रसोई में उठता है कषाय-मधुर धुआँ जो आवाहन करता है देवों का। तदनन्तर हल्दी के समान उज्ज्वल रूप धारण कर, धनियाँ की मँहक बिखेरती साक्षात् अन्नपूर्णा ही इस रसोई में अवतरित होती हैं-अन्नब्रह्म को साकार करती!

द्वितीय छन्दोमुक्त (काव्य) का उदाहरंण के० राजन्नशास्त्री का। उदाहरणार्थ लोभियों की प्रीतियाँ, चलचित्रों की गीतियाँ, अधकचरी बुद्धिवालों की नीतियाँ, अन्याय से कमाई गई सम्पत्ति की स्फीतियाँ (बढ़ोत्तरी) चिरस्थायी नहीं होती हैं।

आधी रात में संचार, कपटपूर्ण व्यवहार, मित्रों का अत्युपचार, विरागियों का शृङ्गार शंकनीय होता है।

गंगाजल के पान से क्या? व्रतों के अनुष्ठान से क्या? स्तुतियों के गान से क्या? तीर्थों के गमन से क्या? यदि भावशुद्धि नहीं है तो।

**तृतीयं छन्दोमुक्तोदाहरणं त्रिपाठिनः कमलेशदत्तस्य। यथा-**

**अयि सुतनुके! कलातत्त्वे भाविते ऐन्दवि!**
**सुतनुके!**
**अपि श्रृणोषि, परिचिनोषि समागतं तं**
**यं कमपि वाराणसेयं परावृत्तम्!**
**भेदिता अब्दाः शिलीभूताः**
**अर्णवप्रसराः परस्तात् सममजन्मा अग्रतस्त्वम्**
**स्वरहिमानी परश्शतवर्षाणि यावज्जडीभूता**
**स्पन्दतेऽथ श्रूयते**

**त्वन्नूपुराणां मन्दमन्दो रवश्शनकै-**

**राहतो मुरजो घनोऽयं तालधारी**
**झङ्कृता तन्त्री पूरयन्नालापचारं**
**वंशकोऽपि**
**तरति वायौ स्वरस्ते परिदेवनार्द्रः!!**

**चतुर्थं छन्दोमुक्तोदाहरणं प्रभाकरनारायणकवठेकरस्य। यथा-**

**अतीतकाले कालकवलिता अनेकराजानः**
**लोकालोकविहीना विस्मृतितमोऽवतीर्णाः**
**स्वसिंहासनस्थसिंहैरेव कवलिताः**
**तान् स्मृत्वाऽमी हसन्ति सारनाथसिंहाः!!**
**प्रथितं भारतराष्ट्रं**
**व्यथितं कथं जनजीवनम्?**
**केचन मनसाऽकिञ्चना**
**विस्मृतराष्ट्रस्वाभिमानाः**
**तानद्यापि हसन्ति सारनाथसिंहाः!!**

तृतीय छन्दोमुक्त काव्य का उदाहरण जैसे कमलेशदत्त त्रिपाठी का-

अयि सुतनुके! भावनामयी चन्द्रकलातत्त्व सरीखी अयि सुतनुके! सुन रही हो तुम? पहचान रही हो उस वाराणसी से आये तथा आकर पुनः लौट गये

मेहमान को? कितने ही वर्ष बीत गये। शिला बन गये समुद्रों के प्रसार! तुम्हारी स्वर-हिमानी भी सैकड़ों वर्षों तक जड़ बनी रही (परन्तु) आज स्पन्दित हो रही है, सुनाई पड़ रही है तुम्हारे बिछुवों की मन्द-मन्द झङ्कार हौले-हौले। बज रहा है ताल को धारण करने वाला यह चण्ड मृदंग! और झंकृत हो रही है आलाप को व्यवस्थित करने वाली वीणा और वंशी! और तैर रहा है पवन में तुम्हारा परिदेवन में भींगा स्वर!

चतुर्थ छन्दोमुक्त काव्य का उदाहरण प्रभाकरनारायण कवठेकर का। उदाहरणार्थ-अतीत काल में काल-कवलित हो उठे अनेक भूपतिगण! लोक-विश्रुत कीर्ति से विरहित, विस्मृति के अँधियारे में डूबे (वे बेचारे) अपने सिंहासन में विद्यमान सिंहो द्वारा ही निगल लिये गये। उनका स्मरण कर हँस रहे हैं ये सारनाथ के सिंह! भारतराष्ट्र तो प्रख्यात है, फिर जनजीवन व्यथित क्यों? कुछ लोग तो मन से ही दरिद्र हो चले हैं, भूल चुके हैं राष्ट्र के स्वाभिमान को। उन पर आज भी हँस रहे हैं सारनाथ के सिंह!!

**पञ्चमं छन्दोमुक्तोदाहरणं घईवेदकुमार्याः। यथा-**

**या खलु निस्पन्दा निर्वचना**
**मणिनिर्मितनेत्री हिरणमयी**
**तव साम्राज्यप्रतीकमश्वमेधं द्रक्ष्यतीव**
**वस्तुतस्सा मदीया प्रतिकृतिर्न द्रक्ष्यति**
**न श्रोष्यति, न वदिष्यति**
**तव कठोरानुशासने भरतलक्ष्मणशत्रुघ्नास्ते**
**भ्रातरोऽपि मूका बधिरा इव**
**मौनिन एव स्थास्यन्ति।**
**परं स्मरणीयमिदं राजन्!**
**राज्यविस्तारलोभेन चक्रवर्तित्वप्राप्त्यर्थं**
**मेध्यमश्वं प्रेषयिष्यसे चेत्**
**मम भाविसन्तत्याः क्षेत्रे**
**सा न मर्षयिष्यते तवाक्रमणं**
**नैव च स्थास्यति दीना मूका**
**तया पराजितो यदि भविष्यसि**
**स्वावमानना नहि मन्तव्या**

**बलवती सा सन्ततिस्तु ममापि तवापि**
**एष एव मे सन्देशः!!**

**षष्ठं छन्दोमुक्तोदाहरणं कृष्णलालस्य। तद्यथा-**

**श्मसानसविधे मया गच्छता**
**रक्तिमसन्ध्यालोके दृष्ट्वा**
**तत्र ज्वालाः शवस्य कस्यचित्**
**चितायां दन्दह्यमानायाः**
**वृद्धः कश्चिन्मयानुयुक्तः**
**कस्यायमद्य शवो दह्यते, जिज्ञासा मे!**
**मामुपरिष्टान्नीचैर्दृष्ट्वा**
**कुपितेनेव जल्पितं जरठेन**
**तवैवायं शवो दह्यते**

पञ्चम छन्दोमुक्त काव्य का उदाहरण वेदकुमारी घई का। उदाहरणार्थ-

जो निश्चित रूप से स्पन्दनहीन है, वाणीविहीन है, मणिनिर्मित नेत्रों वाली, सुवर्ण-प्रतिमा मात्र है वह (सीता) तुम्हारे साम्राज्य के प्रतीकभूत अश्वमेघ को मानो देख रही है। वस्तुतः मेरी वह प्रतिमा (कुछ भी नहीं) देख सकेगी, न सुनेगी, नही बोलेगी। हे राम! तुम्हारे कठोर अनुशासन में वे (तुम्हारे भाई) भरत, लक्ष्मण और शत्रुघ्न भी-गूँगों और बहरों की तरह चुप ही खड़े रहेंगे।

परन्तु यह स्मरणीय है राजन्! कि राज्य-विस्तार के लोभ में (अथवा) चक्रवर्तित्व प्राप्त करने के लिये मेध्य अश्व को यदि आप छोड़ते हैं मेरी भावी सन्तति के क्षेत्र में तो वह आपके आक्रमण को क्षमा नहीं करेगी। वह असहाय और गूँगी बनी खड़ी नहीं रहेगी। यदि उससे पराजित होते हैं तो अपना अपमान मत मानियेगा। क्योंकि वह बलवती सन्तति मेरी भी है (और) आपकी भी। बस, यही है मेरा सन्देश!

षष्ठ छन्दोमुक्त काव्य का उदाहरण कृष्णलाल का। उदाहरणार्थ-

श्मशान के पास से गुजरते मेरे द्वारा, रक्तिम सन्ध्या के प्रकाश में, वहाँ किसी (जलती) लाश की ज्वालाओं को देखकर, किसी बूढ़े से पूछा गया-दादा! मैं जानना चाहता हूँ कि किसकी यह लाश आज जल रही है? मुझे ऊपर से नीचे तक देख कर, कुपित से हुए (उस) बूढ़े ने कहा-यह तुम्हारी ही लाश जल रही है।

ततश्च वृद्धस्तूर्णं यातो मामनवेक्ष्य चिन्तावह्नौ पुनर्दहन्तम्
मन्दं क्रामन्नहमचिन्तयं किमसाधु भणितं जरठेन
ममैव मन्ये शवो दह्यते
मृषा जीवनम्
मिथ्या मयि प्राणसद्भावः!!

सप्तमं छन्दोमुक्तोदाहरणं सनातनोपाह्वरेवाप्रसादद्विवेदस्य। तद्यथा-

अहं स्वतन्त्रः परं निन्दितुं
यदि वात्मानं स्तोतुं तर्पयितुं मम मानसगृद्धं
पोषयितुं मम कायं
धातुमात्रसङ्कायम्
अहं स्वतन्त्रः परस्य कण्ठे करपत्रं चालयितुं
अर्थः सिध्यतु न वा मदीयः
परस्य मार्गं रोद्धुं
जननेतृत्वं बोद्धुं
बहुमतलब्ध्यै यथाकथञ्चित्
कूटगवीमपि दोग्धुम्!
अहं स्वतन्त्रः पटु प्रवक्तुं यमनियमानामर्थान्
लब्धुं ततो दक्षिणाद्रव्यं
निर्मक्षिकमिदमत्तुं
बलीवर्द इव, किञ्च गेहिनीं समां समीनां कर्तुं
गोत्रं स्वं वर्धयितुम्!!

इसके बाद, विना मुझे देखे, बुड्ढा वहाँ से फुर्र हो गया। चिन्ता की आग में जलता, मंदगति से आगे बढ़ता मैं सोचने लगा-क्या बुरा कहा उस बूढ़े ने? सचमुच मेरी ही तो लाश जल रही है। झूठा है मेरा जीवन। इसमें प्राण का होना भी मिथ्या ही तो है।

सप्तम छन्दोमुक्त काव्य का उदाहरण रेवाप्रसाद द्विवेदी 'सनातन' का। उदाहरणार्थ-

स्वतंत्र हूँ मैं परन्तु निन्दा करने के लिये। अथवा अपनी स्तुति करने के लिये, (अपने) मनरूपी गृद्ध को सन्तुष्ट करने के लिये अथवा धातुमात्र-संकाय वाली अपनी देह को पोषित करने के लिये!

स्वतंत्र हूँ मैं दूसरे के गले पर आरी चलाने के लिये। स्वार्थ मेरा सिद्ध हो या नहीं (परन्तु) दूसरे का रास्ता रोकने के लिये, लोगों का नेतृत्व ग्रहण करने के लिये, जैसे-तैसे बहुमत प्राप्त करने के लिये तथा कृत्रिम गाय को भी दुहने के लिये!

स्वतंत्र हूँ मैं यमों-नियमों के अर्थों को पटुतापूर्वक बताने के लिये और उससे दक्षिणाद्रव्य बटोरने के लिये और उस (दक्षिणा) को निर्मक्षिक निगलने के लिये बैल की तरह। अथवा घरवाली को प्रतिवर्ष प्रसविनी करने के लिये, अपना खानदान बढ़ाने के लिये।

**अष्टमं छन्दोमुक्तोदाहरणं पाण्डेयामरनाथस्य। यथा-**

**भिक्षुकीव भिक्षमाणा**
**असहाया वराकी**
**केवलं व्याधिर्न निदानम्**
**वैचित्र्येन मूर्छिता**
**परस्यापि सद्मनि सत्सङ्गतौ स्तोत्रेषु**
**सुरधुनीप्रवाहेऽपि**
**व्यथां विभावयन्ती**
**लिखन्ती कस्यापि बुभुक्षितस्य बालस्य**
**मात्रा पित्रा वियुक्तस्य**
**पदानि स्मरन्ती विवर्णा प्रतिहता**
**तथापि जननीव रक्षिका**
**कविता मदीया!!**

**नवमं छन्दोमुक्तोदाहरणं भट्टिनो देवदत्तस्य। यथा-**

मृत्युरेको वटवृक्षः
यस्याधो जीवनं शममधिगच्छति
मृत्युर्नवजीवनस्य प्रथमः श्वासः
मृत्युर्दुःखितमालिङ्गति
तस्य दुःखञ्च निरस्यति
मृत्युर्जीवनस्य पश्चिमः स्वरः
मृत्युरनिल इवायाति जीवनं चापहरति
मृत्युर्दुःखितजीवितविलापस्यान्तः

जीवनस्यागाधा प्रगाढा शान्तिः
मृत्युर्जीवनस्य स्वापगीतिः
स जीवनं स्वापयति!!

अष्टम छन्दोमुक्त काव्य का उदाहरण अमरनाथ पाण्डेय का। जैसे-

भिखारिन की तरह भीख माँग रही, असहाय, बेचारी, केवल व्याधिस्वरूपा निदान नहीं, अचेतना से मूर्छित, दूसरे के घर में भी, सत्संगति में, स्तुतियों में, गंगा के प्रवाह में भी व्यथा का अनुभव करती, माता-पिता से बिछड़े किसी भूखे-प्यासे बच्चे की कथा लिखती, पदों का स्मरण करती विवर्ण एवं प्रतिहत! फिर भी जननी की तरह रक्षा करने वाली है मेरी कविता!

नवम छन्दोमुक्त काव्य का उदाहरण देवदत्त भट्टि का। जैसे-

मृत्यु है एक बरगद का पेड़ जिसके नीचे जीवन शान्तिलाभ कर पाता है। मृत्यु नई जिन्दगी की पहली साँस है। मृत्यु दुखी का आलिंगन करती है। उसके दुःख को समाप्त कर देती है। मृत्यु जीवन का पश्चिम (अन्तिम) स्वर है। मृत्यु हवा की तरह आती है और अपहृत कर लेती है जीवन को! मृत्यु दुःखमय जीवन के विलाप का अन्त है, जीवन की अगाध एवं प्रगाढ़ शान्ति है। मृत्यु जीवन की लोरी है, वह जीवन को सुला देती है।

दशमं छन्दोमुक्तोदाहरणं त्रिपाठिभास्कराचार्यस्य। यथा-

सुखं जीवति कामकामी
खर्वगात्रो बर्बरः
क्वचिदर्ववक्त्रीवक्रतामवलम्बमानः
क्वापि नयने मीलयित्वा
गद्गदो दर्शितरदो विगलत्त्रपो बहुमद्यपो
जल्पतितरां प्रातिशोधकामी!
रूपधृक्च कृतघ्नतायाः
पूर्वतो जनकस्य कैशोरे गुरूणामद्य सुहृदां
लाभचयमादाय वचः प्रदाय
वृत्तिमवाप्य लोकं व्याप्य
भुक्तविसृष्टकल्पान् क्रमवितल्पान्
तामयं विनिहन्ति नामी
सुखं जीवति कामकामी!!

**एकादशतमं छन्दोमुक्तोदाहरणं चट्टोपाध्यायजयश्रियः। यथा-**

**अम्बरे शृङ्गारी चन्द्रः**
**अद्याप्यमलिना ज्योत्स्ना**
**कवे! तव विरहे विषण्णा रोदिति घनश्यामा रात्रिः**
**अद्यापि विद्युत्स्फुरति**
**अद्यापि शोभते कान्ता**
**वसन्तो विलसति कानने**
**तथापि वसुन्धरा रिक्ता**
**अद्यापि भाति तारा**
**तन्वी तटिनी तरङ्गिणी**
**विस्मयो विशालस्समुद्रे**
**कीर्तिस्तवैका शोचति!!**

दशम छन्दोमुक्त काव्य का उदाहरण भास्कराचार्य त्रिपाठी का। जैसे-

सुख की ज़िन्दगी जीता है लम्पट व्यक्ति। ठिगना कद तथा बर्बर-स्वभाव, कभी घोड़े जैसे मुँहवाला, वक्रता से युक्त, आँखे भींचता हुआ, दाँत दिखाता हुआ, लज्जा को ताख पर रखे, छक कर शराबपिये हुए प्रतिशोध की भावना से बड़बड़ाता रहता है। कृतघ्नता का साकार स्वरूप, बचपन में बाप का, जवानी में गुरुओं का तथा अब मित्रों का लाभ लेता हुआ, बात देकर, नौकरी प्राप्त कर, समाज को व्याप्त कर, भोग कर छोड़ दिये गये क्रमिक सम्बन्धों को यह नष्ट करता रहता है। सुख की ज़िन्दगी जीता है लम्पट व्यक्ति!

एकादश छन्दोमुक्त काव्य का उदाहरण जयश्री चट्टोपाध्याय का-

आकाश में है शृङ्गारी चन्द्रमा! अभी भी है निर्मल चाँदनी। हे कवि! तुम्हारे वियोग में सन्तप्त होकर रो रही है घनश्यामा रजनी! आज भी कौंध रही है बिजली, शोभित हो रही है प्रियतमा, वन में विलसित है वसन्त! फिर भी धरित्री सूनी-सूनी है! आज भी शोभित है नक्षत्रमण्डल, तरंगों से भरी कृशकाय सरिता, समुद्र में विशाल विस्मय है! एक तुम्हारी कीर्ति ही चिन्तामग्न है।

**द्वादशतमं छन्दोमुक्तोदाहरणं हर्षदेवमाधवस्य। यथा-**

**शनैः शनैः वर्षाबिन्दवः पतन्ति**
**मम मृत्तिका शनैः शनैः क्लिन्ना भवति**

मम रिक्ततायां जलं प्रविशति
मम तमसि विद्युन्नीडं रचयति
मम पिहितहृदयद्वारे वात्यासारस्य चरणशब्दः श्रूयते
तदा वातायनवत्
किञ्चिदुद्घाट्यते मय्यपि
एकं प्रभ्रष्टं व्योम
मया प्राप्तमधुना!!

त्रयोदशतमं छन्दोमुक्तोदाहरणं केशवचन्द्रदाशस्य। यथा-

निमग्नजनोऽहं
निमज्जने व्रणितोऽपि करमहं प्रसारयितुं न शक्नोमि!
निमज्जन्तं प्रति
ईर्ष्याया जातके मम हि
अवसितं स्नेहस्य जीवितम्
ममाण्डतो निःसरति शिशुः
नाऽहं वक्तुं प्रभवामि पवनं कदाचित्
वाहयितुं सकृद् दूरदेशम्
अहङ्कारपरिसरे हि मे
महीयसां प्रवेशो निषिद्धः
आतङ्कमात्मसात्कृत्याऽहन्तु जीवामि
मितवेतनवतो निर्वाग्द्वारपालस्येव
प्रवेशप्रस्थानयोः कृते 'नमः' अर्पयितुम्
त्वमिह निर्मीयसे मदीयमृदुविषादतः
मधुमान् आवयोः सम्पर्कः
निमग्नः कश्चिद्दहनाभिषेकः
त्वच्चुम्बनसुलभावसरः
मत्परिचयस्य प्रहरः!!

बारहवाँ छन्दोमुक्त काव्य-उदाहरण हर्षदेव माधव का। जैसे-

धीरे-धीरे गिरती हैं वर्षा की बूँदे। धीरे-धीरे गीली होती है मेरी माटी। मेरे रन्ध्रों में प्रवेश करता है जल। मेरे अन्धकार में घोंसला बनाती है बिजली। मेरे हृदय के बन्द दरवाजे पर हवा के झोंके की पदध्वनि सुनाई पड़ती है। तब

खिड़की की तरह मेरे भीतर भी कुछ खुलता है। एक गिरा हुआ आसमान का टुकड़ा अब मैंने (भी) प्राप्त कर लिया है।

**तेरहवाँ छन्दोमुक्त काव्य का उदाहरण केशवचन्द्रदाश का। जैसे-**

डूबा हुआ व्यक्ति हूँ मैं। डूबने में घायल हुआ भी मैं हाथ फैला पाने में समर्थ नहीं। डूबने वाले के प्रति ईर्ष्या से ओतप्रोत मेरा स्नेह का जीवन ही समाप्त हो गया है। मेरे अण्डे से निकलता है शिशु। मैं कभी भी हवा से नहीं कह पाता कि वह मुझे कहीं दूर देश में ले जाय। मेरे अहंकार की चौहद्दी में महनीयों का प्रवेश निषिद्ध है। मैं तो जीवित हूँ आतंक को गले लगाकर। अल्प वेतन वाले, मौन रहने वाले सन्तरी की तरह मेरा काम ही है बस आने-जाने वालों को सैल्यूट मारते रहना। मेरे मीठे विषाद से तुम बनाये गये हो। मधुमान् है हम दोनो का सम्पर्क। कोई आग का अभिषेक निमग्न है तुम्हारे चुम्बन में अवसर प्राप्त कर। मेरे परिचय का क्षण है यह।

**चतुर्दशतमं छन्दोमुक्तोदाहरणं यथा ममैव मधुपर्ण्याम्-**

**अभिलषामि**
**कश्चिन्महातपा जाबालि-**
**र्ममापि पूर्वजन्मवृत्तमाचक्षीत**
**यदाकर्ण्य, सर्वं विस्मृत्य**
**अहमपि स्वपूर्वजन्मप्रियां कामपि महाश्वेतां**
**सन्द्रष्टुकामो**
**मुक्तविहायसि समुत्पतेयम्!!**
**यथा वा-रदनिके! मामपहाय क्व गताऽसि?**
**किं स्वमृषासान्त्वनाभिर्भीताऽभूः?**
**अद्याप्यहं त्वदाश्वासनं न विस्मृतवानस्मि**
**आशङ्कामग्नः कौतूहलाक्रान्तः आनन्दान्दोलितः**
**चञ्चलशिरोधरः पारावतशावक इव**
**उपर्युपरि, अधोऽधस्तिर्यगवेक्षमाणोऽस्मि**
**हा दैव! न जाने कस्माद्दिगञ्चलादवतरेत्**
**सुवर्णशकटिका!!**

चौदहवाँ छन्दोमुक्त काव्य का उदाहरण जैसे मेरी ही मधुपर्णी में-

चाहता हूँ कि कोई महातपस्वी जाबालि मेरा भी पूर्वजन्म-वृत्त वर्णित करे जिसे सुनकर, सब कुछ भूलकर, मैं भी अपनी पूर्वजन्म की प्रियतमा किसी महाश्वेता को देखने की इच्छा से, मुक्त आकाश में उड़ जाऊँ।

अथवा (दूसरा उदाहरण)

रदनिके! मुझे (अकेला) छोड़ कर तू कहाँ चली गई? क्या अपनी झूठी तसल्लियों से भयभीत हो उठीं? आज भी मैं नहीं भूल पाया हूँ तुम्हारे आश्वासनों को। आशंकाओं में डूबा, कौतूहलों से आक्रान्त, आनन्दों से आन्दोलित चञ्चल ग्रीवा वाले कपोत-शिशु की तरह ऊपर-ऊपर, नीचे-नीचे, अगल-बगल निहार रहा हूँ। हे प्रभो! न जाने किस दिग्भाग से (धरती पर) उतर आये सोने की गाड़ी!

**यथा वा-**

**तरुमूलं वसुन्धरागर्भे-**
**ननु कियद् गभीरं कियद्दृढम्?**
**कियदुत्तुङ्गं नीलाकाशे गिरिशिखरं**
**कियत्पुनस्तीक्ष्णम्?**
**शैतल्यं कियत्कीदृशं वा**
**निर्झरसरिदम्बुदबिन्दूनाम्?**
**दाहश्च कीदृशः सूर्यवह्निवाडवसन्तापज्वालानाम्?**
**द्राक्षापेक्षयापि हन्त कियन्माधुर्यं जननीचुम्बानाम्?**
**कुलिशापेक्षया कियच्चण्डं**
**दुस्सहप्रहरणं दुर्वचसाम्?**
**इत्येवमादिशत-शतनिगूढपृच्छामर्माऽहं परिचिनोमि**
**प्रस्तूय समाधानं शनकैः**
**स्तिमितं कोविदवृन्दं करोमि**
**जातोऽस्मि जगति केवलमेको जीवोऽहं बन्धो!**
**स्वलक्षणः**
**कविरस्मि संसृतौ विलक्षणः!!**

## ॥अथ ग्रन्थोपसंहारः॥

एवं प्रपूर्यते ग्रन्थस्त्रिवेणीकविना मया।
नव्यानामुपकारार्थं प्रत्नानाञ्चापि तुष्टये।।१०३।।

नूतने काव्यशास्त्रेऽस्मिन् समादृत्य पुरातनम्।
मयाऽऽत्मनीनमन्तव्यं यावत्किञ्चित्प्रकाशितम्।।१०४।।

अथवा (तीसरा उदाहरण)

धरती के भीतर वृक्ष की जड़ कितनी गहरी है, कितनी मजबूत है? नीले आसमान में पर्वत का शिखर कितना ऊँचा है, कितना नुकीला है? झरनों, नदियों तथा बादलों के जलविन्दुओं की शीतलता कितनी है, कैसी है? सूर्य, अग्नि, वाडवाग्नि और सन्ताप की ज्वालाओं की जलन कैसी होती है? और द्राक्षा (अंगूर) की भी अपेक्षा कितनी (अधिक) मिठास होती है माँ के चुम्बनों की। वज्रपात की भी अपेक्षा कितना चण्ड (दुस्सह) होता है दुर्वचनो का प्रहार?

इस प्रकार के सैकड़ों गूढ प्रश्नों का मर्म मैं पहचानता हूँ और उनका समाधान बड़ी सरलता से प्रस्तुत कर विद्वत्समुदाय को आश्चर्य-चकित कर देता हूँ। बन्धो! इस धरती पर अपने जैसा मैं एकमात्र जीव पैदा हुआ हूँ (मेरे जैसा दूसरा कोई नहीं) इस संसार में विलक्षणता से ओतप्रोत कवि हूँ मैं।

ग्रंथ का उपसंहार

इस प्रकार त्रिवेणी कवि मेरे द्वारा यह ग्रन्थ, नई पीढ़ी के उपकारार्थ तथा पुरानी पीढ़ी के भी परितोष-हेतु यत्नपूर्वक पूर्ण किया जा रहा है।।१०३।।

इस अभिनव काव्यशास्त्र में, प्राचीन (सिद्धान्तों) का समादर करते हुए मैने अपना जो कुछ भी मन्तव्य प्रकाशित किया है।।१०४।।

चित्रकाव्यगुणीभूतव्यङ्ग्यदोषादिविस्तरः।
पिष्टपेषणदृष्ट्यैव नो मयाऽत्र विवेचितः।।१०५।।

न च तेषु प्रसङ्गेषु ममेदम्प्रथमं पुनः।
आसीत्किमपि वक्तव्यं यद्वा पूर्वबुधाधिकम्।।१०६।।

यन्नूतनयुगापेक्षि काव्यशास्त्रविवेचनम्।
स्वतः प्रामाण्यमाश्रित्य तदेवात्र निरूपितम्।।१०७।।

विश्वभाषापदारूढा साम्प्रतं सुरभारती।
ततश्चाद्यतनं रूपं ध्रुवमस्या बृहत्तमम्।।१०८।।

प्रभावितवती सेयं भाषा अन्या यथा स्वयम्।
प्रभाविताऽन्यभाषाभिस्तथेयं परिलक्ष्यते।।१०९।।

पाश्चात्त्यकाव्यसिद्धान्ता अनेके हि यथायथम्।
व्यङ्ग्यार्थमथ वक्रोक्तिं संस्पृशन्ति न संशयः।।११०।।

हाइॅकूतानकासीजोसॉनेटलीरिकादयः।
काव्यभेदा विजातीयाः प्रणीयन्तेऽधिसंस्कृतम्।।१११।।

आदानं च प्रदानञ्च सम्भवत्येव साम्प्रतम्।
नैकभाषानदीष्णेषु सत्सु संस्कृतसूरिषु।।११२।।

कवयो नाऽवरोद्धव्या एवम्प्रणयिनस्ततः।
अभिनन्द्यस्तदुत्साह इत्यभिराजसम्मतम्।।११३।।

लोको भिन्नरुचिस्तस्माद्रुचिरेकाऽभिनन्द्यताम्।
रोचयेत्काममन्येषां रुचिं साऽप्यथवा न वा।।११४।।

चित्रकाव्य, गुणीभूतव्यङ्ग्य और दोष आदि का विस्तार, पिष्टपेषण की दृष्टि से ही मैने यहाँ विवेचित नहीं किया है।।१०५।।

उन सारे प्रसंगों में, मेरा अपनी ओर से कोई सर्वथा नया वक्तव्य नहीं था जो कि पूर्वाचार्यों के वक्तव्यों की तुलना में अधिक होता।।१०६।।

इसलिये वर्तमानयुग की अपेक्षा रखने वाला जो काव्यशास्त्रीय विवेचन आवश्यक था मैने, स्वतः प्रमाण्य का आश्रय लेकर, मात्र वही निरूपित किया है।।१०७।।

आज देववाणी संस्कृत विश्वभाषा के पद पर आरूढ है। इसलिये संस्कृत का अद्यतन स्वरूप निश्चित रूप से (पहले की अपेक्षा) वृहत्तम है।।१०८।।

इस भाषा ने जिस प्रकार अन्यान्य (देसी-विदेशी) भाषाओं को स्वयं प्रभावित किया उसी प्रकार (आज) यह स्वयं भी अन्य भाषाओं से प्रभावित परिलक्षित हो रही है।।१०९।।

अनेक पाश्चात्त्य काव्यशास्त्रीय सिद्धान्त, जैसे के तैसे, व्यङ्ग्यार्थ अथवा वक्रोक्ति की अवधारणा का संस्पर्श करते हैं, इसमें कोई संशय नहीं।।११०।।

हाइॅकू, तान्का, सीज़ो, सानेट तथा लीरिक आदि विजातीय काव्य भेद भी आज संस्कृत भाषा में प्रणीत किये जा रहे हैं।।१११।।

संस्कृतेतर अन्यान्य विदेशी भाषाओं में भी पारंगत संस्कृत विद्वानों में आदान-प्रदान की प्रक्रिया तो चल ही रही है।।११२।।

इसलिये, इस प्रकार की काव्य-रचना करने वाले कवियों को रोकना नहीं चाहिये प्रत्युत उनके उत्साह (उपक्रम) का अभिनन्दन किया जाना चाहिये, ऐसा **अभिराज** का मत है।।११३।।

लोक तो भिन्न रुचि वाला होता ही है। अतएव एकमात्र रुचि का ही स्वागत किया जाना चाहिये। वह रुचि अन्य विद्वानों की रुचि का पोषण करे अथवा न भी करे।।११४।।

**वाञ्छन्त्यात्ममतं सर्वे सर्वलौकैः समर्थितम्।**
**परन्तु विघ्नितोत्साहा दृश्यन्तेऽन्यसमर्थने।।११५।।**

**स्वार्थवृत्तिरियं नूनं न प्रशस्तेति वच्म्यहम्।**
**आत्मवद् व्यवहर्तव्यो मान्योऽमान्योऽथवा परः।।११६।।**

**सहसाऽन्यमतं दूष्यं नैव पूर्वाग्रहादपि।**
**तद्धै गुणज्ञतां हन्ति सहृदयत्वलक्षणम्।।११७।।**

**आत्मसंस्थापनीयात्तु नूनं दशगुणाधिकम्।**
**परेषामथ श्रोतव्यं मननीयञ्च सद्दृशा।।११८।।**

**सरणिर्नैव हातव्या पूर्वसूरिप्रदर्शिता।**
**अन्यथा देववाणीयं नैव वाणी भविष्यति।।११९।।**

**मूलं न दृश्यते कामं धरागर्भे निगूहितम्।**
**समग्रपादपास्तित्वं तदधीनं तथाप्यहो।।१२०।।**

**पुरातनं तथास्माकं समग्रास्तित्वधारकम्।**
**गर्भात्पुरातनस्यैव नूतनं वस्तु जायते।।१२१।।**

**अहञ्चाप्यस्मि सर्वत्र नूतनत्वप्रशंसकः।**
**नूतनत्वमहोन्मादः किन्तु मह्यं न रोचते।।१२२।।**

**देववाणीसमीक्षायामपि केचिद् विपश्चितः।**
**पाश्चात्त्यशब्दसन्दोहानिह सम्मेल्य हर्षिताः।।१२३।।**

**आधुनिकतावादो हि तेषामन्यतमो मतः।**
**अन्ये च तादृशाः शब्दाः सरलीकरणादिकाः।।१२४।।**

सब लोग यही चाहते हैं कि उनके (ही) मन्तव्य का समर्थन सबके द्वारा किया जाय। परन्तु वही लोग दूसरे के मत का समर्थन करने में निरुत्साह दिखाई पड़ते हैं।।११५।।

निश्चित रूप से यह स्वार्थवृत्ति है और प्रशस्त नहीं है। वह मैं खुलकर कह रहा हूँ। अपने जैसा ही व्यवहार (औरों के साथ भी) करना चाहिये। भले ही दूसरा मत आपको मान्य हो अथवा अमान्य हो।।११६।।

पूर्वाग्रह हो तो भी अकस्मात् (अविवेक के साथ) दूसरे के मत को दूषित नहीं करना चाहिये। ऐसा व्यवहार गुणवत्ता को नष्ट करता है और नष्ट करता है सहृदयता के लक्षण को।।११७।।

अपनी संस्थापनाओं से भी दस गुना अधिक शोभन दृष्टि के साथ दूसरों के मन्तव्यों को सुनना चाहिये तथा (उस पर) मनन करना चाहिये।।११८।।

पूर्वसूरियों द्वारा प्रदर्शित (परमत-सहिष्णु) सरणि का परित्याग नहीं करना चाहिये अन्यथा यह देव-वाणी वाणी भी नहीं रह जायेगी।।११९।।

धरती के गर्भ में तिरोहित (वृक्ष की) जड़ भले ही प्रत्यक्ष दृष्टिगोचर नहीं होती फिर भी, आश्चर्य है कि सम्पूर्ण वृक्ष का अस्तित्व उसी के अधीन होता है।।१२०।।

ठीक उसी प्रकार हमारा जो कुछ भी पुरातन है वही (हमारे) समग्र (वर्तमान) अस्तित्व का धारक है। पुरातन के गर्भ से ही नूतन वस्तु का जन्म होता है।।१२१।।

मैं भी सर्वत्र नूतनता का प्रशंसक (पक्षधर) हूँ परन्तु नूतनता का महोन्माद (नग्ननृत्य) मुझे पसन्द नहीं।।१२२।।

देववाणी की समीक्षा में भी कुछ विद्वान् पाश्चात्त्य तकनीकी शब्दों को घुसेड़ कर प्रसन्न हो रहे हैं आज।।१२३।।

उनमें से एक शब्द है-आधुनिकतावाद! और भी उसी प्रकार के शब्द हैं जैसे-सरलीकरण आदि।।१२४।।

**कोऽयम्भो अधुनावादः केन कस्मात्प्रकल्पितः।**
**कश्चोत्तराधुनावादस्तस्याप्यनुसहोदरः??१२५??**

**किमप्याधुनिकं नास्ति काव्यसृष्टौ यतस्त्विदम्।**
**काव्यं भवति कूटस्थं शाश्वतं नु चिरन्तनम्।।१२६।।**

**कवयः कालिदासाद्याः किन्नाऽभूवन्निजे युगे।**
**आधुनिका नवाचारास्तथैव क्रान्तदृष्टयः।।१२७।।**

सर्व एव कविर्जीवन् भवत्येवाऽधुनातनः।
कीर्तिशेषो व्रजत्येव परन्तु शाश्वताङ्गताम्।।१२८।।

हन्ति व्याकरणं वादश्चेदयं नव्यतोन्मदः।
समुल्लङ्घ्यते यद्वा नाट्यशास्त्रस्य देशनाः।।१२९।।

मृतं काव्यं मृतं नाट्यं मृतं सर्वं पुरातनम्।
यद्युत्तराऽधुनावादो घुष्यतीति गतत्रपः।।१३०।।

तर्हि तं प्रणमाम्येव धर्मारण्यघ्नसिन्धुरम्।
प्रणमामि च सिद्धान्तानुरक्तानथ कोविदान्।।१३१।।

कालदृष्ट्यैव कामं स्यादतीतं भावि साम्प्रतम्।
तथापि किञ्चिदस्त्येव त्रिष्वेष्वपरिवर्तितम्।।१३२।।

मैं पूछता हूँ, भाई लोगों! यह आधुनिकतावाद क्या है? यह किसके द्वारा और क्यों कल्पित किया गया है? और उसका भी छोटा भाई उत्तर आधुनिकतावाद क्या है??१२५??

क्योंकि (मेरी दृष्टि में तो) काव्य की सृष्टि में यह आधुनिक जैसा तो कुछ भी नहीं होता है। काव्य तो कूटस्थ, शाश्वत एवं चिरन्तन (Eternal) होता है। (उसमें नये-पुराने का भेद कैसा?)।।१२६।।

कालिदास आदि कवि क्या अपने-अपने युग में नवाचार-सम्पन्न, क्रान्त दृष्टि वाले आधुनिक नहीं हुए होंगे??१२७??

हर एक कवि अपने जीवन काल में आधुनिक तो होता ही है। परन्तु कीर्तिशेष होते ही वह शाश्वतता का प्रतीक बन जाता है।।१२८।।

नूतनता के मोह में उन्मद यह (आधुनिकता का) सिद्धान्त यदि व्याकरण के नियमों को परिवर्तित करता है कि द्विवचन अनावश्यक है आदि। अथवा नाट्यशास्त्र की देशनाओं का समुल्लंघन करता है।।१२९।।

काव्य मर गया, नाट्य मर गया, पुराना सब कुछ मर गया-इस प्रकार की घोषणा यदि करता है उत्तर आधुनिकतावाद लज्जा को ताख पर रखकर।।१३०।।

तो धर्मारण्य की सुख-शान्ति नष्ट करने वाले वन्यगज-सरीखे उस सिद्धान्त को मैं प्रणाम ही करता हूँ और प्रणाम करता हूँ उन सिद्धान्तों में अनुरक्त विद्वानों को।।१३१।।

काल-प्रवाह की ही दृष्टि से भले ही (कविता में) अतीत, भविष्य एवं वर्तमान का भेद हम कल्पित कर लें फिर भी इन तीनों कालखण्डों में भी कुछ तो ऐसा होता ही है जो अपरिवर्तित (स्थिर) बना रहता है।।१३२।।

तदेव शाश्वतं यन्नो कदापि परिवर्तते।
शाश्वतेनैव तेनेदं धृतं काव्यञ्च जीवनम्।।१३३।।

ततश्शाश्वततावादे श्रद्धा मम महीयसी।
येन प्रवर्तते सृष्टिः काव्ये धर्मेऽथ संस्कृतौ।।१३४।।

श्वसितिचयहवींषि प्रत्यहं वाङ्मखाग्नौ
सरसकवनमन्त्रैरात्मसृष्टैः समर्प्य।
हिमसितवरटस्था शारदा साऽर्चिता मे
व्यतरदिह ममत्वं यत्फलं ग्रन्थ एषः।।१३५।।

निगमविशदमन्त्रैरागमप्रोक्ततन्त्रै-
र्विबुधचरितगाथास्थापितैर्लोकलक्ष्यैः।
ननु जगदुपकारं कुर्वती कामधेनु-
र्महितसुरगवीयं स्थेमहेम्ना चकास्तु।।१३६।।

दृग्रसाकाशयुग्माख्ये वैक्रमाब्देऽधिसन्ध्यकम्।
आषाढे सुदि भौमाह्नि ग्रन्थ एष प्रपूर्यते।।१३७।।

उन्मेषेऽस्मिन् कारिकासंख्या-१३७

।। इति श्रीमद्गौतमगोत्रोत्पन्नस्य भभयाख्यमिश्रवंशावतंसस्य।।
श्रीमद्दुर्गाप्रसादाऽभिराजीतनूजस्य पण्डितप्रकाण्डश्रीमदाद्या-
प्रसादमिश्रभ्रात्रीयस्य त्रिवेणीकविसंज्ञितस्याभिराज-
राजेन्द्रस्याभिनवे काव्यशास्त्रेऽभिराजयशोभूषणे
प्रकीर्णतत्त्वोन्मेषाख्यः पञ्चमोंऽशः।

वही है शाश्वत (तत्त्व) जो कभी बदलता नहीं है। उसी शाश्वतता द्वारा धारण किया जाता है काव्य और यह जीवन!!१३३!!

इसलिये शाश्वततावाद में ही मेरी सर्वाधिक श्रद्धा है जिसका आश्रय लेकर काव्य में, धर्म में और संस्कृति में सृष्टि प्रवर्तित होती है।।१३४।।

स्वयं निर्मित, रसमय कवितारूपी मंत्रों के उच्चारण के साथ, वाणीरूपी मखाग्नि में श्वासपरम्परारूपी हविष् को प्रतिदिन हुन कर समर्चित की गई,

हिमधवल राजहंस पर आसीन उस भगवती शारदा ने मुझे वत्सलता प्रदान की जिसका सत्फल है यह ग्रंथ-**अभिराजयशोभूषणम्**!!१३५!!

वेद-संहिता में प्रकाशित मंत्रों, आगम-प्रोक्त तंत्रों, देवचरितात्मक गाथाओं द्वारा स्थापित सांसारिक (उदात्त) लक्ष्यों द्वारा भूतल का उपकार करने वाली कामधेनु-कल्पा यह देववाणी (संस्कृत भाषा) स्थिरतारूपी सौवर्ण-प्रभा से देदीप्यमान बनी रहे।।१३६।।

दृक् (=२) रस (=६) आकाश (=०) युग्म (=२) अर्थात् २०६२ विक्रमसंवत् में आषाढ शुक्ल मंगलवार के दिन, सन्ध्याकाल में यह ग्रंथ पूर्ण हो रहा है।।१३७।।

इस उन्मेष में कारिकाओं की संख्या-१३७

**श्रीमद् गौतमगोत्रोत्पन्न भभया नामक मिश्रवंश के अलंकरण-स्वरूप महाभागवत पण्डितरामानन्द मिश्र के पौत्र, विद्वत्प्रकाण्ड आचार्य आद्याप्रसादमिश्र के भ्रातृज तथा श्रीमद् दुर्गाप्रसाद एवं अभिराजी देवी के मध्यमपुत्र त्रिवेणीकवि अभिराजराजेन्द्र के अभिनव काव्यशास्त्र अभिराजयशोभूषण में यह प्रकीर्णतत्त्वोन्मेष नामक पाँचवाँ अंश पूर्ण हुआ।**

***

# ॥ग्रन्थकृत्परिचयः॥

यत्पादाम्भोरुहाणां हिमशिशिरघनच्छायया वारितोष्णः
काव्यं नाट्यञ्च शास्त्रं तदितरदधिकं मुक्तियुक्त्याध्यगच्छम्।
वन्दे तान्कोविदेन्द्रान्मयि विततदयान् मिश्रमाद्याप्रसादं
लक्ष्मीकान्तं सुरेशं विबुधातरुनिभं शुक्लचण्डीप्रसादम्।।१।।

प्रणीयेदमभिराजयशोभूषणमञ्चितम्।
भूयः प्रवर्तये रुद्धां काव्यशास्त्रपरम्पराम्।।२।।

सदुक्तिगुणलुब्धेन मया नूनमनुष्ठितम्।
साहसमकलिङ्गेन श्रियं हन्त लभे न वा।।३।।

क्व सूर्याः मम्मटाद्यास्ते क्व चाहं लघुदीपकः।
तुल्यं किन्तूभयोर्लक्ष्यं शारदासौधकाशनम्।।४।।

प्रीयतां वागधिष्ठात्री कालिदासयशोधरा।
ममैतेन विलासेन सात्त्विकेनाऽनुरञ्जिता।।५।।

जिनके चरण-कमलों की हिम-शीतल घनी छाँव में (विद्याध्ययन-जनित) आतप का शमन करते हुए मैने काव्य एवं नाट्य, शास्त्र औरउनसे भी कहीं अधिक मुक्ति-प्राप्ति की युक्तियों का अध्ययन किया, मेरे प्रति अतिशय वत्सल सुरतरु-सरीखे उन विद्वद्धुरीणों-आद्याप्रसाद मिश्र, लक्ष्मीकान्त दीक्षित, सुरेशचन्द्र पाण्डे एवं चण्डिकाप्रसाद शुक्ल जी को प्रणाम अर्पित करता हूँ।।१।।

इस रमणीय (सांगोपांग) अभिराजयशोभूषणम् का प्रणयन कर मैं अवरुद्ध (संस्कृत) काव्यशास्त्र की परम्पराका पुनः प्रवर्तन कर रहा हूँ।।२।।

सदुक्तियों एवं गुणों के प्रति लुब्ध मैने निश्चय ही, कलिङ्गाभिजन न होते हुए भी, साहस ही किया है (जब कि प्रसिद्ध है-कलिङ्गस्साहसिकः) पता नहीं यश प्राप्त होगा अथवा नहीं।।३।।

कहाँ वे सूर्य-आचार्य मम्मटादि? और कहाँ मैं-एक लघु दीपक! परन्तु (सूर्य एवं दीपक) दोनो का लक्ष्य तो एक ही है-शारदामन्दिर को प्रकाशित करना!!४!!

कविकुलगुरु कालिदास के यश को धारण करने वाली तथा मेरे इस सात्त्विक विलास (उपक्रम) से अनुरञ्जित वागधिष्ठात्री (मुझ पर) प्रसन्न हो।।५।।

***

# यशोभूषणकारिकानुक्रमणी

***

# उदाहरणपद्याऽनुक्रमणिका

***